नमो नमो निम्मल दंसणस्स
पंचम गणधर श्री सुधर्मास्वामिने नमः

# १३ राजप्रश्नीय-उपाङ्गसूत्रं

## स टी कं

## द्वीतीयं उपाङ्ग सूत्रम्

(मूलम् + श्री मलयगिरि आचार्य विरचिता वृत्तिः)

॥१॥ प्रणमत वीरजिनेश्वरचरणयुगं परपाटलच्छायम् ।
अधरीकृतनतवासवमुकुटस्थितरत्नरुचिचक्रम् ॥

॥२॥ राजप्रश्नीयमहं विवृणोमि यथाऽऽगमं गुरुनियोगात् ।
तत्र च शक्तिमशक्तिं गुरवो जानन्ति का चिन्ता ॥

अथ कस्मादिदमुपाङ्गं राजप्रश्नीयाभिधानमिति ?, उच्यते, इह प्रदेशिनामा राजा भगवतः केशिकुमारश्रमणस्य समीपे यान् जीवविषयान प्रश्नानकार्षीत्, यानि च तस्मै केशिकुमारश्रमणो गणभृत् व्याकरणानि व्याकृतवान्, यद्य व्याकरणसम्यक्परिणतिभावतो बोधिमासाद्य मरणान्ते शुभानुशययोगतः प्रथमे सौधर्मनाम्नि नाकलोके विमानामाधिपत्येनाधितिष्ठत्, यथा च विमानाधिपत्यप्राप्त्यनन्तरं सम्यगवधिज्ञानायोगतः प्रथमे सौधर्मनाम्नि नाकलोके विमानमाधिपत्येनाधितिष्ठत्, यथा च विमानाधिपत्यप्राप्त्यनन्तरं सम्यगवधिज्ञानाभोगतः श्रीमद्वर्धमानस्वामिनं भगवन्तमालोक्य भक्त्यतिशयपरीतचेताः सर्वस्वसामग्रीसमेत इहावतीर्य भगवतः पुरतो द्वात्रिंशद्विधि नाट्यमनरीनृत्यत् ।

नर्तित्वा च यथाऽऽयुष्कं दिवि सुखमनुभूय ततश्च्युत्वा यत्र समागत्य मुक्तिपदमवाप्स्याति, तदेतत्सर्वमस्मिन्नुपाङ्गेऽभिधेयं, परं सकलवक्तव्यतामूलं राजप्रश्नीय इति- राजप्रश्नेषु भवं राजप्रश्नीयं । अथ कस्याङ्गस्येदमुपाङ्गं ?, उच्यते, सूत्रकृताङ्गस्य कथं तदुपाङ्गतेति चेत्, उच्यते, सूत्रकृते ह्यङ्गे अशीत्यधिकं शतं क्रियावादिनां, चतुरशीतिरक्रियावादिनां, सप्तषष्टिरज्ञानिकानां, द्वात्रिंशद्वैनयिकानां, सर्वसङ्ख्यया त्रीणि शतानि त्रिषष्ट्यधिकानि पाखण्डिकशतानि प्रतिक्षिप्य स्वसमयः स्थाप्यते, उक्तं च नन्द्यध्ययने-१ "सुयंगडे णं असीयसयं किरिआवाईणं चतुरासीई अकिरियावाईणं सत्तट्ठी अन्नाणियवाईणं बत्तीसा वेणइयवाईणं तिण्हं तेवट्ठाणं पासंडियसयाणं वियूहं किच्चा ससमए ठाविज्जई त्ति, प्रदेशी च राजा पूर्वमक्रिया वादिमतभावितमना आसीत्, अक्रियावादिमतमेव चावलम्ब्य जीवविषयान् प्रश्नानकरोत्, केशिकुमारश्रमणश्च गणधारी सूत्रकृताङ्गसूचितमक्रियावादिमतप्रक्षेपमुपजीव्य व्याकरणानि व्याकार्षित् ।

ततो यान्येव सूत्रकृताङ्गसूचितानि केशिकुमारश्रमणेन व्याकरणानि व्याकृतानि तान्येवात्र

सविस्तरमुक्तानीति सूत्रकृताङ्गगतिविशेषप्रकटनादिदमुपाङ्गं सूत्रकृताङ्गस्येति।

एतद्वक्तव्यतां च भगवता वर्द्धमानस्वामिन गौतमाय साक्षादभिहिता, तत्र यस्यां नगर्यां येन प्रक्रमेणाभ्यदीयत तदेतत्सर्वमभिविसुरिदमाह-

## सूर्याभदेवः प्रकरणं

**मू. (१)** *ते णं काले णं ते णं समए णं आमलकप्पा नामं नयरी होत्था, रिद्धत्थिमिसमिद्धा जाव पासा दीया दरिसणिज्ञा अभिरूवा पडिरूवा।*

**वृ.** 'ते णंकाले णं ते णमित्यादि' 'ते' इति प्राकृतशैलीवशात्तस्मिन्निति द्रष्टव्यं, अस्यायमर्थो-यस्मिन्काले भगवान् वर्द्धमानस्वामी स्वयं विहरति स्म तस्मिन्निति, 'ण'मिति वाक्यालङ्कारे, दृष्टश्चान्यत्रापि णंशब्दो वाक्यालङ्कारार्थो यथा-'इमा णं पुढवी' इत्यादाविति, 'काले' अधिकृताव-सर्पिणीचतुर्थविभागरूपे, अत्रापि णंशब्दो वाक्यालङ्कृतौ।

'ते णं समए णं' समयोऽवसर' वाची, तथा च लोके वक्तारो-नाद्याप्येतस्य वक्तव्यस्य समयो वर्त्तते। किमुक्तं भवति?-नाद्याप्येतस्य वक्तव्यस्यावसरो वर्तते इति, तस्मिन्निति यस्मिन् समये भगवान् सूर्याभदेववक्तव्यतामचकथत् तस्मिन् समये आमलकल्पा नाम नगरी अभवत्, नन्विदानीमपि सा नगरी वर्त्तते ततः कथमुक्तमभवदिति?, उच्यते वक्ष्यमाणवर्ण्णक- ग्रन्थोक्त-विभूतिसमन्विता तदैवा भवत्, न तु विवक्षितोपाङ्गविधानकाले, तदपि कथमवसेयमिति चेत्, उच्यते अयं कालः अवसर्प्पिणी, अवसर्प्पिण्यां च प्रतिक्षणं शुभा भावा हानिमुपगच्छन्ति, एतच्च सुप्रतीतं जिनवचनवेदिनामतोऽभवदित्युच्यमानं न विरोधमभाक्।

सम्प्रत्यस्या नगर्या वर्णकमाह 'रिद्धत्थिमियसमिद्धा जाव पासाइया दरिसणिज्ञा अभिरूवा पडिरूवा' इति ऋद्धा-भवनैः पौरजनैश्चातीव वृद्धिमुपागता, 'ऋधिवृद्धा'विति वचनात्, स्तिमिता-स्वचक्रपरचक्रतस्करडमरादिसमुत्थभयकल्लोलमालाविवर्जिता, समृद्धा-धन-धान्यादिविभूतियुक्ता, ततः पदत्रयस्य विशेषणसमासः, यावच्छब्देन 'पमुइयजणजाणवया' प्रमुदिताः-प्रमोदवन्तः प्रमोदहेतुवस्तूनां तत्र सद्भावात्, जनानगरीवास्तव्यलोकाः जानपदाः-जनपदभवास्तत्र प्रयोजनवशादायाताः सन्तो यत्र सा प्रमुदितजनजानपदा, 'आइण्णजणमणूसा' मनुष्यजनैराकीर्ण्णा, प्राकृतत्वात्पदव्यत्ययः, ''हलसयसहस्ससंकिट्ठविगिट्ठलट्ठपन्नत्तसेउसीमा'' हलानां शतैः सहस्रैश्च सङ्कृष्टा विलिखिता विकृष्टाःनगर्या दूरवर्त्तिनी भावः, लष्टा-मनोज्ञा प्राज्ञैः छेकैरात्ता प्राज्ञाभा, छेकपुरुषपरिकर्मितेति भावः।

सेतुसीमा कुल्याजलसेच्यक्षेत्रसीमा यस्याः सा हलशतसहस्रसङ्कृष्टविकृष्टलष्टप्राज्ञा-ससेतुसीमा, 'कुक्कडसंडेयगामपउरा' कुक्कुडसम्पात्या ग्रामाः सर्वासु दक्षु विदिक्षु च प्रचुरा यस्याः सा कुक्कुडसण्डेयग्रामप्रचुराः, 'गोमहिसगवेलगप्पभूया' गावो-बलीवर्दा महिषाः-प्रतीता गावः-स्त्रीगव्य एडकाः-उरभ्रास्ते प्रभूता यस्यां सा तथा, 'आयारवन्तचेइयजुवइविसिट्ठसन्निविट्ठबहुला' आकारवन्ति-सुन्दराकाराणि चैत्यानि युवतीनां च पण्यतरुणीनामिति भावः, विशिष्टानि सन्निविष्टानि, सन्निवेशपाटका इति भावः, बहुलानि-बहूनि यस्यां सा तथा, 'उक्कोडियगाय-गंठिभेदतक्करखंडरक्खरहिया' उत्कोटा-लञ्चा तया चरन्ति उत्कोटिकास्तर्गात्रभेदैः-

शरीरविनाशकारिभिर्ग्रन्थिभेदैः ग्रन्थिच्छेदैः तस्करैः खण्डरक्षैः–दण्डपाशिकै रहिता, अनेन तत्रोपद्रवकारिणामभावमाह, 'क्षेमा' अशिवाभावात्, 'निरवद्दवा' राजादिकृतोपद्रवाभावात्, 'सुभिक्षा' भिक्षुकाणां भिक्षायाः सुलभत्वात्, 'विसत्थसुहावासा' विश्वस्तो–निर्भयः सुखमावासो लोकानां यस्यां सा तथा।

'अनेगकोडिकोडुंबियाइण्णनिव्वुत्तसुहा' अनेककोटीभिः–अनेककोटिसङ्ख्याकैः कौटुम्बिकैराकीर्ण्णा निरवृत्ता सन्तुष्टजनयोगात् शुभा शुभवस्तूपेतत्वात्, ततः पदर्यस्य कर्मधारयः, "नडनट्टजल्लमल्लमुट्ठियवेलंबगकहगपवकलासकआइकखयलंखमंखतूणइल्लतुंबवीणिय अनेगतालाचराणुचरिया" नटा–नाटयितारो, नर्त्तका ये नृत्यन्ति, जल्ला–राज्ञः स्तोत्रपाठकाः, मुल्लाः प्रतीता मौष्टिका–मल्ला एव ये मुष्टिभि प्रहरन्ति, विडम्बकाः विदूषकाः कथकाः–प्रतीताः प्लवका–ये उत्पल्वन्ते नद्यादिकं वा तरन्ति, लासका–ये रासकन् गायन्ति, जयशब्दप्रयोक्तारो वा माण्डा इत्यर्थः, आख्यायिका–ये सुभाशुभमाख्यान्ति लङ्खा–महावंशाग्रखेलका मङ्खाः–चित्रफलकहस्ता भिक्षुकाः, 'तूणइल्ला' तूणमभिधानवाद्यविशेषवन्तः तुम्बवीणिकाः–तुम्बवीणावादका,

अनेके च ये तालाचराः–तालादानेन प्रेक्षाकारिणः, एतैः सर्वैरनुचरिता–आसेविता या सा तथा, "आरामुज्जाण अगडतलागदीहियवप्पिणिगुणो ववेया" आरामा यत्र माधवीलतागृहविषु दम्पत्यादीन्यागत्य रमन्ते, उद्यानामि–पुष्पादिमद्वृक्षसङ्कुलान्युत्सवादी बहुजनभोग्यानि अगडत्ति–अवटाः कूपास्तडाकानि–प्रतीतानि दीर्घिकाः–सारिण्यः, विप्पिणित्ति–केदाराः, एते गुणोपपेता–रम्यतादिगुणोपपेता यस्यां सा तथा, 'उव्विद्धविउलगंभीरखातफलिहा' उव्विद्धं–उण्डं विउलं-विस्तीर्ण्णं गम्भीरम्–अलब्धमध्यं खातम्–उपरिविस्तीर्ण्णमधः सङ्कुचितं परिखा च–अध उपरि च समखातरूपा यस्यां सा तथा, 'चक्कगयमुसंढिओरोहसयग्घिजमलकवाडघणदुप्पवेसा' चक्राणि–प्रहरणविशेषरूपाणि गदाः–प्रहरणविशेषाः मुषण्ढयोऽप्येवंरूपा अवरोधः–प्रतोली-द्वारेष्वन्तःप्राकारः सम्भाव्यते, शतघ्न्यो महायष्टयो महासिला वा याः पातिताः शतानि पुरुषाणां घ्नन्ति यमलानि–समस्थितद्रव्यरूपामि यानि कपाटानि घनानि च–निश्छिद्राणि तैर्दुप्रवेश या सा तथा।

'धणुकुडिलवंकपागारपरिखित्ता' धनुकुडिलं–कुटिलं धनुस्ततोऽपि वक्रेण प्राकारेण परिक्षिप्ता या सा तथा, 'कविसीसयवट्टरइयसंठियविरायमाणा' कपिशीर्षकैर्वृत्तरचितसंस्थितैः–वर्तुलकृतसंस्थानैर्विराजमाना–शोभमाना या सा तथा, 'अट्टालयचरियदारगोपुरतोरणउ-न्नयसुविभत्तरायमग्गा' अट्टालकाः–प्राकारोपरिमृत्याश्रयविशेषाः चरिका–अष्टहस्तप्रमाणो मार्गः द्वाराणि–भवनदेवकुलादीनां गोपुराणि–प्राकारद्वारामि तोराणानि च उन्नतानि–उच्चानि यस्यां सा तथा, सुविभक्ता–विविक्ता राजमार्ग्गा यस्यां सा तथा, ततः पदद्वयस्य कर्म्मधारयः, 'छेया-यरियरइयदढफलिहइंदकीला' छेकेन–निपुणेनाचार्येण–शिल्पोपाध्याये रचितो दढो बलवान् परिघः–अर्गला–वणिकपथानां हट्टमार्ग्गाणा वणिजां च क्षेत्रं–स्थानं सा विवणिवणिकक्षेत्रं तथा शिल्पिभिःकुम्भकारादिभिर्निर्वृत्तैः–सुखिभि शुभैः–स्वस्वकर्मकुशलैराकीर्ण्णा, प्राकृतत्वाञ्च सूत्रेऽन्यथा पदोपन्यासः।

ततः पूर्वपदे नकर्मधारयः, 'सिंघाडगतियचउक्कचरच्चरपणियापणविविहवसुपरिमंडिया' शृङ्गाटकत्रिकचतुष्कचत्वरैः पणितानि—क्रयाणकानि तत्प्रधानेषु आपणेषु यानि विवधानि वसनि—द्रवाणि तैश्च परिमण्डिता, शृङ्गाटकं—त्रिकोणं स्थानं, त्रिकं—यत्र रथ्यात्रयं मिलति, चतुष्कं—रथ्याचतुष्कमीलनात्मकं, चत्वरं—बहुरथ्यापातस्थानं, 'सुरम्मा' सुरम्या—अतिरम्या, 'नरवइपविइन्नमहवइपहा' नरपतिना—राज्ञा प्रविकीर्णो गमनागमनाभ्यां व्याप्तो महीपतिपथो—राजमार्गो यस्यां सा तथा, 'अनेगवरतुरगमत्तकुंजररहपहकरसीयसंदमाणीआइण्णजाणजोगा' अनेकैर्वतरतुरगाणां मत्तकुञ्जराणां रथानां च पहकरैः—सङ्घातैः तथा शिबिकाभिः स्यदमानीभिर्यानैर्युग्यैश्चाकीर्णा—व्याप्ता या सा तथा, आकीर्णशब्दस्य मध्यनिपातः प्राकृतत्वात्, तत्र शिबिकाः—कूटाकारेणाच्छादिता जम्पानविशेषाः स्यन्दमानिकाःपुरुषप्रमाणा जम्पानविशेषा यानानि—शकटादीनि युग्यानि—गोल्लविषयप्रसिद्धानि द्विहस्तप्रमाणानि वेदिकोपशोभितानि जम्पानान्येव, 'विमउलनवनलिणसोमियजला' विमुकुलैः—विकसितैर्नवैर्नलिनैः—समलैः शोभितानि जलानि यस्यां सा तथा, 'पंडुरवरभवनपंतिपहिया उत्ताणयनयणपिच्छणिज्जा' इति सुगमं ।

'पासाइया' इत्यादि, प्रासादेषु भवा प्रासादीया, प्रासादबहुला इत्यर्थ, अत एव दर्शनीया द्रष्टुं योग्या, प्रासादानामतिरमणीयत्वात्, तथा अभिद्रष्टन् प्रतिप्रत्येकमभिमुखतीव चेतोहारित्वात् रूपम्—आकारो यस्यां—सा अभिरूपा, एतदेव व्याचष्टे—प्रतिरूपा, प्रतिविशिष्टम्—असाधारणण् रूपण्—आकारो यस्यां सा प्रतिरूपा।

मू. *(२) तीसे णं आमलकप्पाए नयरीए बहिया उत्तरपुरत्थिमे दिसीभा अंबसालवने नामं चेइए होत्था, पोराणे जाव पडिरूवे ।*

वृ. "तीसे ण" मित्यादि, तस्यां णमिति पूर्ववत् आमलकल्पायां नगर्यां वहि उत्तरपौरस्त्ये—उत्तरूपर्वास्पे ईशाणकोणे इत्यर्थः, दिग्भागे 'अम्बसालवनें' इति आम्रैः शालैश्चातिप्रचुरतयोपलक्षितं यद्वनं तदाम्रशालवनं तद्योगाच्चैत्यमपि आम्रशालवनं, चितेःलेप्यादिचयनस्य भावः कर्म्म वा चैत्यं तच्च इह संज्ञाशब्दत्वात् देवताप्रतिबिम्बे प्रसिद्धं ततस्तदाश्रयभूतं यद्देवनाया गृहं तदप्युपचारात् चैत्यं, तच्चेह व्यन्तरायतनं द्रष्टव्यं, न तु भगवतामर्हतामायतनं, 'होत्थ'त्ति अभवन् तच्च किंविशिष्टमित्याहचिरातीते पुराणे यावच्छब्दकरणात् 'सद्दिए कत्तिए नाए स्छत्ते सज्झए' इत्याद्यौपपातिकग्रन्थप्रसिद्धवर्ण्णकपरिग्रहः ।

एवंरूपं च चैत्यवर्ण्णकमुक्त्वा वनखण्डवक्तव्यता वक्तव्या, सा चैवं— 'से णं अंबसालवने चेइए एगेणं महया वनसंडेणं सव्वओ समंता संपरिक्खित्ते, से णं नसंडे किण्हामासे इत्यादि यावत्पासाइए दरिसणिज्जे अभिरूवे पडिरूवे' तत्र प्रसादीयं—कृष्णावभासत्वादिना गुणेन मनःप्रसादहेतुत्वाद्दर्शनीयं चक्षुरानन्दहेतुत्वात्, अभिरूपप्रतिरूपशब्दार्थ प्राग्वत्, तत उक्तं—'जाव पडिरूवे'

मू. *(३) असोयवरपायवपुढविसिलावट्टयवत्तव्वया उववातियगमेणं नेया ॥*

वृ. अशोकवरपादपस्य पृथिवीशिलापट्टकस्य च वक्तव्यता औपपातिकग्रन्थानुसारेण ज्ञेया, सा चैवं—'तस्स णं वनसंडस्स बहुमज्झदेसभाए इत्थ णं महं एगे असोगवरपायवे पन्नत्ते जाव पडिरूवे, से णं असोगवरपायवे अन्नेहिं बहूहिं तिलएहिं जाव नंदिरुक्खेहिं सव्वओ समंता संपरिक्खित्ते, ते णं तिलगा जाव नन्दीरुक्खा कुसविकुसविसुद्धरुक्खमूला मूलमंतो कंदमंतो

जाव पडिरूवा, ते णं तिलगा जाव नंदिरुक्खा अन्नाहिं बहूहिं पउमलयाहिं नागलयां असोगलयाहिं चंपगलयाहिं चूयलयाहिं वनलयाहिं वासंतिय लयाहिं अइमुत्तयलयाहिं कुंदलयाहिं सामलयाहिं सव्वतो समंता संपरिखित्ता।

ताओ णं पउमलयाओ जाव सामलयाओ निच्चं कुसुमियाओ जाव पडिरूवाओ, तस्स णं असोगवरपायवस्स उवरिं बहवे अट्ठट्ठमंगलगा पन्नत्ता, तंजहा–सोत्थियं सिरिवच्छ नंदियावत्त वद्धमाणग भद्दासन कलस मच्छदप्पणा सव्वरयणामया अच्छा सण्हा लण्हा घट्ठा मट्ठा नीरया निम्मला निप्पंका निक्ककडच्छाया सप्पभा समिरीया सउज्जोया पासादीया दरसणिज्जा अभिरूवा पडिरूवा।

तस्स णं असोगवरपायवस्स उवरिं बहवे किण्हचामरज्झया नीलचामरज्झया लोहियचामरज्झया हालद्दचामरज्झया सुक्किल्लचामरज्झया अच्छा सण्हा लण्हा रूप्पपट्टा वइरामयदंडा जलयामलगंधिया सुरम्मा पासाइया दरिसणिज्जा अभिरूवा पडिरूवा,

तस्स णं असोगवरपायवस्स उवरिं बहवे छत्ताइछत्ता पडागाइपडागा घंडाजुयला चामरजुयला उप्पलहत्थगा पउमहत्थगा कुमुयहत्थगा नलिनहत्थगा सुभगहत्थगा सोगंधियहत्थगा पोंडरियहत्थगा महापोंडरियहत्थगा सयपत्तहत्थगा सहस्सपत्तहत्थगा सव्वरयणामया अच्छा जाव पडिरूवा। तस्स णं असोगवरपायवस्स हेट्ठा एत्थ णं महं एगे पुढविसिलापट्टए पन्नत्ते इसिखंधासमल्लीणे विकखंभायामसुप्पमाणे किण्हे अंजणगघणकुवलयहलधरकोसेज्जसरिस-आगासकेसकज्जलकक्कयणइंदनीलअयसिकुसुमप्पगासे भिंगंजणभंगभेयरिट्ठगगुलियगवलाइरेगे भमरनिकुरुंबभूते जंबूफलअसणकुसुमसणंबंधणनीलुप्पलपत्तणिगरमरगयासासगणयम-कीयसिवन्ननिद्धे घने अज्झुसिरे रूवगपडिरूवगदरिसणिज्जे आयंसगतलोवमे सुरम्मे सीहासणसंठिते सुरूवे मुत्ताजालखईयंतकम्मे आइणगरूयबूरनवनीय-तूलफासे सव्वरयणामए अच्छे जाव पडिरूवे' इति, अस्य व्याख्या 'तस्स णमिति' पूर्ववत् वन-खण्डस्य बहुमध्यदेशभागे 'अत्र' एतस्मिन् प्रदेशे महान् एकोऽशोकवरपादपः प्रतीस्तीर्थकरगणधरैः, स च किम्भूत इत्याह–'जाव पडिरूवे' अत्र यावच्छब्देन ग्रन्थान्तरप्रसिद्धं विशेषणजातं सूचितं, तच्चेदं–'दुरुग्गयकन्दमूलवट्टलट्ठसंधिअसिलिट्ठ घणमसिणसिणिद्धअणुपुव्विसुजायणिरुवह- तोव्विद्धपवरखंधी अनेगणरपवरभुयअगेज्झे कुसुमभरसमोणमंतपत्तलविसालसाले महुकरिभमरगणगुमुगुमाइयणिलिंतउड्डेंतसस्सिरीए नानासउणगणमिहुणसुमहुरकण्ण- सुहपलत्तसद्दमहुरे कुसुविकुसविसुद्धरुकखमूले पासाइए दरिसणिज्जे अभिरूवे पडिरूवे'

तत्र दूरमुत्–प्राबल्येन गतं कन्दस्याधस्तात् मूलं यस्य स दूरोद्गतकन्दमूलस्तथा वृत्तभावेन परिणत एवं नाम सर्वासु दिक्षु विदिक्षु च शाखाभि प्रशाखाभिश्च प्रसृतो यथा वर्तुलः प्रतिभासते इति, तथा लष्टाः–मनोज्ञाः सन्धयः–शाखा गता यस्य स लष्टसन्धिस्तथा अश्लिष्टः–अन्यैः पादपैः सहासम्पृक्तो, विविक्त इत्यर्थः, ततो विशेषणसमासः, स च पदद्वयमीलनेनावसेयो, बहूनां पदानां विशेषणसमासानभ्युपगमात्, तथा धनो–निविडो मसृणः–कोमलत्वक् न कर्कशस्पर्शः, स्निग्धः–शुभकान्ति, आनुपूर्व्या–मलादिपरिपाट्या सुष्ठु जन्मदोषरहितं यथा भवति एवं जात आनुपूर्वीसुजातः, तथा निरपहत–उपदेहिकाद्युपद्रवरहित उद्विद्धः–उच्चः प्रवरः–प्रधानः स्कन्धो

यस्य स धनमसृणस्निग्धानुपूर्वीसुजातनिरुपहतोद्विद्धप्रवरस्कन्धः, तथा अनेकस्य नरस्य—मनुषस्य ये प्रवराः—प्रलम्बा भुजाः—बाहवस्तैरग्राह्यः अपरिसेयोऽनेकनरप्रवरभुजाग्राह्यः, अनेकपुरुष-व्यामैरप्यप्रतिमेयस्थौल्य इत्यर्थः ।

तथा कुसुमभरेण—पुष्पसम्भारेण सम्—ईषदवनन्त्यः पत्रसमृद्धाः 'पत्तसमिद्धंति खंधपित्तलमि' ति वचनात् विशाला—विस्तीर्णा शालाः—शाखा यस्य स कुसुमभरसमवनमत्पत्रलविशाल-शालः, तथा मधुकरीणां भ्रमराणां च ये गणा 'गुमगुमायिता' गुमगुमायन्ति सम्, कर्म्मकर्तृत्वात्कर्तरि क्तप्रत्ययो, गुमगुमेति शब्दं कृतवन्तः सन्त इत्यर्थो, निलीयमानाः—आश्रयन्त उड्डीयमानं—तदत्यासन्नामाकाशे परिभ्रमन्तस्तैः सश्रीको मधुकरीभ्रमरगणगुमगुमयितनिलीयमानोड्यमान-सश्रीकः, तथा नानाजीतायनां शकुनगणानां यानि मिथुनानि—स्त्रीपुंसयुग्मानि तेषां प्रमोदवशतो यानि परस्परसुमधुराण्यत एव कर्णसुखानि—कर्णसुखदायकानि प्रलप्तानि—भाषणानि, शकुनगणानां हि स्वेच्छया क्रुडतां प्रमोदभरवशतो यानि भाषणानि तानि प्रलप्तानीति प्रसिद्धानि ततः 'पलत्ते' त्युक्तं ।,

तेषां यः शब्दो—ध्वनिस्तेन मधुरो नानाशकुनगणमिथुनसुमधुरकर्णसुखप्रलप्तशब्दमधुरः, तथा कुशा—दर्भादयो विकुशा—वल्वजादयाः तैर्विशुद्धं—रहितं वृक्षस्य—सकलस्याशोकपादपस्य, इह मूलं शाखादीनामपि आदिगो [illegible] लक्षणया प्रोच्यते, यथा [illegible]-मित्यादि, ततः सकलाशोकपादपसत्कमूलप्रतिपत्तये वृक्षग्रहणं, मूलं यस्य स कुशविकुशविशुद्ध-वृक्षत्रमूलो, यश्चैवंविधः स द्रष्टृणां चित्तसन्योपाय भवति, तत आह प्रासादीयः— प्रसादाय—चित्तसन्तोषाय हितस्तदुत्पादकत्वात् प्रासादीय अत एव दर्शनीयो—द्रष्टुं योग्यः, कम्मादिन्याह—'अभिरूपो'द्रष्टारं २ प्रत्यभिमुखं न कम्यचिद्विरागहेतु रूपम्—आकारो यस्यासावभिरूपः, एवंरूपोऽपि कुतः ।

इत्याह—प्रतिरूपः—प्रतिविशिष्टं सकलजगदसाधारणं रूपं यस्य स प्रतिरूपः ।

'से णं असोगवरपायवे' इत्यादि 'जाव नंदिरुक्खेहिं' इत्यत्र यावच्छब्दकरणात्, 'लउएहिं छत्तोवगेहिं सिरीसेहिं सत्तवण्णेह लोद्धेहिं दधिवन्नेहिं चंदणेहिं अज्जुनेहिं नीवेहिं कयंबेहिं फणसेहिं दाडिमेहिं सालेहिं तमालेहिं पियालेहिं पियंगूहिं रायरुक्खेहिं नंदीरुक्खेहिं' इति परिग्रहः, एते च लबकच्छत्रोपगशिरीषसप्तपर्णदधिपर्णलुब्धकधवचन्दनार्जुननीपकदम्बफनसदाडिम-तालतमालप्रियालप्रियङ्गुलरजवृक्षनन्दिवृक्षाः प्रायः सुप्रसिद्धाः, 'ते णं तिलगा जाव नंदिरुक्खा कुसुविकुसे' त्यादि ते तिलका यावन्नंदिवृक्षाः कुशविकुसविशुद्धवृक्षमूलाः, अत्र व्याख्या पूर्ववत्, 'मूलवन्तः' मूलानि प्रभूतानि दूरावगाढानि च सन्त्येषमिति मूलवन्तः, कन्त एषामस्तीति कन्दवतन्तः, यावच्छब्दकरणात् सन्धिमन्तो तयामन्तो सालमन्तो पवालमन्तो पत्तमंतो पुप्फमंतो फलमंतो वीयमंतो अनुपुव्विसुजायरुइलवट्टभावपरिणया एगखंधा अनेगसाहप्पसाहविडिमा अनेगनर-वामसुप्पसारिय अगिज्झधणविपुलवट्टखंधा अच्छिद्दपत्ता अविरलपत्ता अवाईइपत्ता अनईणपत्ता निव्धुयजरढपंडुपत्ता नवहरियभिसंतपत्तभारंधयारगंभीरदरिसणिज्ञा उवनिग्गयनवतरुणपत्तपल्लवा कोमलउज्जलचलंतकिसलयसुकुमालपवालसोभियवरंकुरग्गसिहरा ।

निच्चं कुसुमिया निच्चं मउलिया निच्चं लवइया निच्चं थवइया निच्चं गुलइया निच्चं गोच्छिया

निच्चं जमलिया निच्चं जुयलिया निच्चं नमिया निच्चं पणमिया निच्चं कुसुमियमउलियलव-इयथवइयगुलइयगुच्छियजमलियजुयलियविणमियपणमियसुविभत्तपिंडिमंजरिवडिंसयधरा सुकबरहिणमणसकलागाकोइलकोरुगकभिंगारककोंडलकजीवंजीवकनंदीमुखकविलपिंगल-क्खगकारंडवचक्कवाककलहंससारसणेगसउणगणमिहुणविरइयसद्दोन्नइयमहुरसरणाइया सुरम्मा सुपिंडियदरियभमरमहुयरिपहकरपरिलिंतमत्तछप्पयकुसुमासवलोलमहुरगुमगुमंतगुंजंतदेसभागा अब्भिंतरपुप्फफला बाहिरपत्तोच्छण्णा पत्तेहि य पुप्फेहि य उच्छन्नपलिच्छिन्ना निरोगका साउफला अकंटका नाणाविहगुच्छगुम्ममंडवगसोहियाविचित्तसुहकेउपभूया वाविपुक्खरिणिदीहियासु य सुनिवेसियरम्मजालधरगा पिंडिमनीहारिमसुगंधिसुहसुभिमणहरं च महया गंधद्धाणु मुंचंता सुहसेउकेतुबहुला अनेगसगडजाणजुग्गगिल्लिथिल्लिसीयसंदमानिपडिमोयगा पासाइया दरिसणिज्जा अभिरूवा पडिरूवा' इति परिग्रहः।

अस्य व्याख्या—इह मूलानि सुप्रतीतानि यानि कन्दस्याध प्रसरन्ति, कन्दास्तेषां मूलानामुपरिवर्तिनस्ते अपि प्रतीताः, खन्धः—थुडं त्वक्—छल्ली शालाः—शाखाः प्रवालः—पल्लवाङ्कुरः पत्रपुष्पफलबीजानि सुप्रसिद्धानि, सर्वत्रातिशयेन कचिद् भूम्नि वा मतुप्प्रत्ययः, 'अनुपुव्वसुजाय-रुचिलवट्टभावपरिणया' इति आनुपूर्व्या—मूलादिपरिपाट्या सुष्ठु जाता आनुपूर्वीसुजाता रुचिराः—स्निग्धतया देदीप्यमानच्छविमन्तः, तथा वृत्तभावेन परिणता वृत्तभावपरिणताः, किमुक्तं भवति

एवं नाम सर्वासु दिक्षु विदिक्षु च शाखाभिः प्रशाखाभिश्च प्रसृता यथा वर्तुलाः संजाता इति, आनुपूर्वसुजाताश्च ते रुचिराश्च आनुपूर्वीसुजातरुचिरास्ते च ते वृत्तभावपरिणताश्च आनुपूर्वी-सुजातरुचिरवृत्तभावपरिणताः ते तथा, तिलकादयः पादपाः प्रत्येकमेकस्कन्धाः, प्राकृते चास्य स्वत्वमिति 'एगखंधा' इति सूत्रपाठः, तथा अनेकाभि शाकाभि प्रशाखाभिश्च मध्यभागे विटपो—विस्तारो येषां ते तथा, तिर्यग् बाहुद्वयं प्रसारणप्रमाणो व्यामः, व्यामीयन्ते—परिच्छिद्यन्ते रज्ज्वाघनेनेति व्यामः, बहुलवचनात् 'करणे कचिदि' ति डप्रत्ययः, अनेकैर्नरव्यामैः—पुरुषव्यामैः सुप्रसारितैरग्राह्यः अप्रमेयो घनो—निविडो विपुला—विस्तीर्णो वृक्षः— स्कन्धो येषां ते अनेकनरव्याम- सुप्रसारिताग्राह्यघ-नविपुलवृत्तस्कन्धाः, तथा अच्छिद्राणि पत्राणि येषां ते अच्छिद्रपत्राः, किमुक्तं भवति ? —न तेषां पत्रेषु वातदोषतः कालदोषतो वा गड्डरिकादिरितरुपजातो येन तेषु पत्रेषु छिद्राण्यभविष्य-न्नित्यच्छिद्रपत्राः अथमा एवं नामान्योऽन्यं शाखाप्रशाकानुप्रवेशात्पत्राणि पत्राणामुपरि जातानि येन मनागप्यपान्तरालरूपं छिद्रं नोपलक्ष्यते इति।

तथा चाह—'अविरलपत्ता' इति, अत्र हेतौ प्रथमा, ततोऽयमर्थः—यतः अविरलपत्रा अतोऽच्छिद्रपत्राः, अविरलपत्रा इति कुत इत्याह—अवातीनपत्रा वातीनानि वातोपहतानि, वातेन पातिनानीत्यर्थः, न वातीनानि अवातीनानि पत्राणि येषां ते तथा, किमुक्तं भवति? न प्रबलेन खरपरुषेण वातेन तेषां पत्राणि भूमौ निपात्यन्ते, ततोऽवातीनपत्रत्वादविरलपत्रा इति अच्छिद्रपत्रा इति, अच्छिद्रपत्रा इत्यत्र प्रथमव्याख्यानपक्षमधिकृत्य हेतुमाह—'अणईइपत्ता' न विद्यते ईतिः—गड्डरिकादिरूपा येषां तान्यनीतीनि अतीतीनि पत्राणि येषां ते अतीतपत्राः, अतीतिपत्रत्वा-दच्छिद्रपत्राः, 'निद्धयजरढपंडुपत्ता' इति निर्द्धूतानि—अपनीतानि जरठानि पाण्डुपत्राणि येभ्यस्ते निर्द्धूतजरठपाण्डुपत्राः, किमुक्तं भवति ?

यानि वृक्षस्थानि जरठानि पाण्डुपत्राणि वातेन निर्द्धून भूमौ पातितानि भूमेरपि च प्रायो निर्द्धूय निर्द्धूयान्यत्रापसारितानीति, 'नवहरियभिसंतपत्तभारंधयारगंभीरदरिसणिज्जा' इति नवेन-प्रत्यग्रेण हरितेन-नीलेन भासमानेन स्निग्धत्वेन वा दीप्यमानेन पत्रभारेण-दलसञ्चयेन यो जातोऽन्धकारस्तेन गम्भीरा-अलब्धमध्यभागाः सन्तो दर्शनीया नवहरितभासमान-पत्रभारान्धकारगम्भीरदर्शनीयाः, तथा उपविनिर्गतैः निरन्तरविनिर्गतैरिति भावः, नवतरुण-पत्रपल्लवैस्तथा कोमलैः--मनोज्ञैरुज्वलैः-शुद्धैश्चलद्भिर्ईषत्कम्पमानैः किशलयैः-अवस्था- विशेषोपेतैः पल्लविशेषैस्तथा सुकुमारैः प्रवालैः-पल्लवाङ्कूरैः शोभितानि वराङ्कुराणि-वराङ्कुरोपेतानि अग्रशिखराणि येषां ते उपनविनिर्गतनवतरुणपत्रपल्लवकोमलोज्वलचलत्किशलयसुकुमालप्रवाल-शोभितवराङ्कुराग्रशिखराः इहाङ्कुरप्रवालयोः कालकृतावस्थाविशेषाद्विशेषो भावनीयः ।

तथा नित्यं-सर्वकालं षट्स्वपि ऋतुषु इत्यर्थ, 'कुसुमिताः' कुसुमानि इहाङ्कुरप्रवालयोः कालकृतावस्थाविशेषाद्विशेषो भावनीयः । तथा नित्यं-सर्वकालं षड्स्वपि ऋतुषु इत्यर्थ, 'कुसुमिताः' कुसुमानि पुष्पाणि सञ्जातान्येषा- मिति कुसुमिताः, तारकादिदर्शनादितप्रत्ययः, 'निच्चं मालइया' इति नित्यंसर्वकालं मुकुलितानि, मुकुलानि नाम कुडमलानि कलिका इत्यर्थः, 'निच्चं लवइया' इति पल्लविताः, नित्यं 'थवइया' इति स्तबकिताः स्तबकभारवन्त इत्यर्थः, नित्यं 'गुलइया' इति गुल्मिताः स्तवकगुल्मौ गुच्छविशेषौ, नित्यं 'गोच्छिता' गोच्छवन्तः, नित्यं 'जमलिता' यमलंनाम समानजातीययोर्युगम् तत् सञ्जातमेषा- मिति यमलिताः, नित्यं युगलिता युगलं-सजातीय-विजातीययोर्द्वन्द्वं तदेषां सञ्जातमिति युगलिताः, तथा नित्यं-सर्वकालं फलभरेण विनताः-ईषन्नताः, तथा नित्यं महता फलभरेण प्रकर्षेणातिदूरं नताः प्रणताः, तथा नित्यं-सर्वकालं सुविभक्तः-सुविच्छित्तिकः प्रतिविशिष्टो मञ्जरीरूपो योऽवतंस- कस्तद्धरास्तद्धारिणः ।

एवं सर्वोऽपि कुसुमितत्वादिको धर्म्म एकैकस्य वृक्षस्योक्तः, साम्प्रतं केषाञ्चिद्वृक्षाणां सकलकुसुमितत्वादिधर्मप्रतिपादनार्थमाह-'निच्चं कुसुमियमउयलयेत्यादि' किमुक्तं भवति-केचित्कुसुमिताद्येकैकगुणयुक्ताः केचित्समस्तकुसुमितादिगुणयुक्ता इति, अत एव कुसुमियमालइ-यमउलियेत्यादिपदेषु कर्मधारयः, तथा शुकबर्हिणमदनशालिकाकोकिलाकोरकक्कोभव-भिङ्गारक-कोण्डकलजीवंतीजीवकनन्दीमुखकपिलपिङ्गलाक्षकारण्डवचक्रवाककलहंससारसाख्यानामनेकेषां शकुनगणानां मिथुनैः-स्त्रीपुंसयुक्तैर्यद्विचरितम्-इतस्ततो गमनं यच्च शब्दोन्नतिकं-अन्नतशब्दकं मधुरस्वरं च नादितं-लपितं येषु ते तथा, अत एव सुरम्याः सुष्ठु रमणीयाः, अत्र शुकाः-कीराः, बर्हिणो-मयूराः, मदनशालिकाः शारिकाः, कोकिलाः-पिकाः, चक्रवाककलहंससारसाः प्रतीताः, शेषास्तु जीवविशेषा लोकतो वेदितव्याः, तता सम्पिण्डिताः एकत्र पिण्डीभूताः दप्ताः- मदोन्मत्तया दर्पाध्माता भ्रमरमधुकरीणां पहकराः-सङ्घाताः 'पहकर ओरोह संघाया' इति देशीनाममाला-वचनात् यत्र ते सम्पिण्डितदप्तभ्रमरमधुकरीपहकराः ।

तथा परिलीयमानाः-अन्यत आगत्याश्रयन्तो मत्ताः षट्पदाः कुसुमासवलोलाः-किञ्जल्कपानलम्पटा मधुरं गुमगुमायमाना गुञ्जन्तश्च-शब्दविशेषं च विदधाना देशभागेषु येषां ते परिलीयमानमत्तषटपदकुसुमासवलोलमधुरगुमगुमायमानगुञ्जद्देशभागाः, गमकत्वादेवमपि

समासः, ततो भूयः पूर्वपदेन विशेषणसमासः, तथा अभ्यन्तराणि अभ्यन्तरभागवर्तीनि पुष्पाणि च फलानि च पुष्पफलानि येषां ते तथा, 'बाहिरपत्तोच्छन्ना इति' बहिस्तः पत्रैश्छन्ना–व्याप्ता बहिपत्रच्छन्नाः, तथा पत्रैश्च पुष्पैश् अवच्छन्नपरिच्छन्नाः–अत्यन्तमाच्छादिताः, तथा नीरोगकाः रोगवर्जिता अकण्टककाः–कण्टकरहिताः, न तेषां प्रत्यासन्ना बब्बूलादिवृक्षाः सन्तीति भावः, तथा स्वादूनि फलानि येषां ते स्वादुफलाः, तथा स्निग्धानि फलानि येषां ते स्निग्धफलाः।

तथा प्रत्यासन्नैर्नानाविधैः–नानाप्रकारैर्गुच्छैः–वृन्ताकीप्रभृतिभिर्गुल्मैः–नवमालिकादिभिर्मण्डपकैः शोभिता नानाविधगुच्छगुल्ममण्डपकशोभिताः, तथा विचित्रैः–नानाप्रकारैः शुभैः–मण्डनभूतैः केतुभि–ध्वजैर्बहुला–व्याप्ता विचित्रशुभकेतुबहुला–, तथा 'वाविपुक्खरिणीदिहियासु य सुनिवेसियरम्मजालधरगा' वाप्यश्चतुरस्रकारास्ता एव वृत्ताः पुष्करिण्यः, यदिवा पुष्कराणि वर्तन्ते यासु ताः पुष्करिण्यः, दीर्घिका–ऋजुसारिण्यः, वापीषु पुष्करिणीषु दीर्घिकासु च सुष्ठु निवेशितानि रम्याणि जालगृहकाणि येषु ते वापीपुष्करिणीदीर्घिकासु सुनिवेशितरम्यजालगृहकाः, तथा पिंडिमा–पिण्डिता सती निर्हारिमा–दूरं विनिर्गच्छन्ती पिण्डिमनिर्हारिमा तां सुगन्धि सुगन्धिकां शुभसुरभिभ्यो गन्धान्तरेभ्यः उक... मनोहरा शुभसुरभिमनोहरा तां च।

'महया' इति प्राकृतत्वात् द्वितीयार्थे तृतीया, महतीमित्यर्थ, गन्धघ्राणिं यावद्भिर्गन्धपुद्गलैर्गन्धविषये गन्धघ्राणिरुपजायते तावती गन्धपुद्गलसंहतिरुपचारात् गन्धघ्राणिरित्युच्यते, तां निरन्तरं मुञ्चन्तः, तथा 'सुहसेउकेउबहुला' इति शुभाः–प्रधाना इति सेतवो–मार्गा आलवालपाल्यो वा केतवो–ध्वजा बहुला बहवो येषां ते तथा, 'अनेगरहसगडजाणजुग्गगिल्लिथिल्लिसिवियसंदमाणियपडिमोयणा' इति, रथा द्विविधा–क्रिडारथाः सङ्ग्रामरथाश्च, शकटानि प्रतीतानि, यानानि–सामान्यतः शेषाणि वाहनानि युग्यानि–गोल्लविषयप्रसिद्धानि द्विहस्तप्रमाणानि वेदिकोपशोभितानि जम्पानानि शिबिकाः–कूटाकारेणाच्छादिता जम्पानविशेषाः स्यन्दमानिकाः पुरुषप्रमाणजम्पानविशेषाः, अनेकेषां रथशकटादीनां मध्येऽतिविस्तीर्णत्वात्, प्रतिमोचनं येषु तत्तथा, 'पासादीया' इत्यादिपदचतुष्टं प्राग्वत्।

'ते णं तिलगा' इत्यादि पाठसिद्धं, नवरं 'नागलयाहिं' ति नागाः–द्रुमविशेषाः 'वणलयाहिं' ति वना अपि द्रुमविशेषाः, द्रुमाणां च लतात्वमेकशाखाकानां द्रष्टव्यं, ये हि द्रुमा ऊर्ध्वगतिकशाखा न तु दिग्विदिकप्रसृतबहुशाखास्ते लता इति प्रसिद्धाः, 'निच्चं कुसुमियाओ जाव पडिरूवाओ' इत्यत्र यावच्छब्दकरणात् 'निच्चं कुसुमियाओ निच्चं मालइयाओ निच्चं लवइयाओ निच्चं थवइयाओ निच्चं गुच्छियाओ निच्चं गुम्मियाओ निच्चं जमलियाओ निच्चं जुयलियाओ निच्चं विणमियाओ निच्चं पणमियाओ सुविभत्तपडिमंजरिवडिंसगधरीओ निच्चं कुसुमियलइयथवइयलवइयगुम्मियजमलियजुयलियगुच्छियविणमयपणमियसुविभत्तपडिमंजरिवडिंसगधरीओ संपिंडियदरियभमरमहुयरिपहकरपरिल्लितमत्तछप्पयकुसुमासवलोलमहुरगुमगुमेंतगुंजंतदेसभागाओ पासाइयाओ दरिसणिज्जाओ अभिरूवाओ पडिरूवाओ इति' एतच्च समस्तं प्राग्वत् व्याख्येयं, तस्य 'ण' मिति प्राग्वत्, अशोकवरपादपस्य उपरि बहूनि अष्टवष्टौमङ्गलकानि प्रज्ञप्तानि।

तद्यथा–स्वस्तिकः श्रीवृक्षो 'नंदियावत्ते' इति नन्द्यावर्त्तः क्वचिद् नन्दावत्त इति पाठः, तत्र नन्दावर्त्त इति शब्दसंस्कारः, वर्द्धमानकं–शरावसम्पुटं भद्रासनं कलशो मत्स्ययुगमं दर्पणः,

एतानि चाष्टावपि मङ्गलकानि सर्वरत्नमयानि अच्छानि–आकाशस्फटिकवदतीव स्वच्छानि श्लक्ष्णानि–श्लक्ष्णपुद्गलस्कन्धनिष्पन्नानि श्लक्ष्ण (तन्तु) निष्पन्नपटवद् लण्हानि–मसृणानि घुण्टितपटवद् 'घट्ठाइं'ति घृष्टानीव घृष्टानि खरशाणया पाषाणप्रतिमावात् 'मट्ठाइं'ति मृष्टानीव मृष्टानि, सुकुमारशाणया पाषाणप्रतिमेव, अत एव नीरजांसि–स्वाभाविकरजोरहितत्वात्, निर्मलानि–आगन्तुकमलाभावात्, निष्पङ्कानि–कलङ्कविकलानि कर्दमरहितानि वा निष्कङ्कटा–निष्कवचा निरावरणा निरुपघातेति भावार्थश्छाया–दीप्तिर्येषां तानि निष्कङ्कटच्छायानि 'सप्रभाणि' स्वरूपतः प्रभावन्ति 'समरीचीनि' बहिर्विनिर्गताकिरणजालानि, अत एव सोद्योतानि–बहिर्व्यवस्थितवस्तुस्तोमप्रकाशकराणि 'पासाइया' इत्यादिपदचतुष्टयव्याख्या पूर्ववत्

'तस्स णमि'त्यादि, तस्य 'ण'मिति प्राग्वत्, अशोकवरपादपस्योपरि बहवः कृष्णचामरध्वजाः, चामराणि च ध्वजाश्च चामरध्वजाः कृष्णाश्च ते चामरध्वजाश्च कृष्णचामरध्वजाः, एवं नीलचामरध्वजाः, लोहितचामरध्वजाः, हारिद्रचामरध्वजा, शुक्लचामरध्वजाः, एते च कथम्भूता इत्याह–अच्छाः–स्फटिकवदतिनिर्मलाः, श्लक्ष्णाः–श्लक्ष्णपुद्गलस्कन्धनिष्पन्नाः, 'रूप्पपट्टा' इति रूप्यो–रूप्यमयो वज्रमयस्य दण्डस्योपरि पट्टो येषां ते रूप्यपट्टाः 'विरदण्डा' इति वज्रो–वज्ररत्नमयो दण्डो रूप्यपट्टमध्यवर्ती येषांते वज्रदण्डाः, तथा जलजानामिव–जलजकुसुमानां पद्मादीनामिवामलो गन्धो येषां ते जलजामलगन्धकाः अत एव सुरम्याः–अतिशयेन रमणीयाः पासाइया' इत्यादि पूर्ववत्, तस्स णमिति प्राग्वत्, अशोकवरपादपस्योपरि बहूनि छत्रातिच्छत्राणि छत्रात्–लोकप्रसिद्धादेकसङ्ख्याकादीशायीनि छत्राणि उपर्यधोभागेन द्विसङ्ख्यानि त्रिसङ्ख्यानि वा छत्राणि छत्रातिच्छत्राणि।

तथा बहवयः 'पडागाइपडागा' इति पताकाभ्यो लोकप्रसिद्धाभ्योऽतिशायिन्यः पताकाः पताकातिपाताकाः बहूनि तेष्वेव छत्तारितच्छत्रादिषु घण्टायुगलानि चामरयुगलानि, तथा तत्र तत्र प्रदेशे उत्पलहस्तकाः– उत्पलाख्या जलजकुसुमसङ्घातविशेषाः, एवं पद्महस्तकाः कुमुदहस्तकाः नलिनहस्तकाः सुभगहस्तका सौगन्धिकहस्तकाः पुण्डरीकहस्तका महापुण्डरीकहस्तकाः शतपत्रहस्तकाः सहस्रपत्रहस्तकाः सुभगहस्तकाः उत्पलं–गर्दभकं पद्मं–सूर्यविकाशि पङ्कजं मुकुदं कैरवं नलिन्म ईषद्रक्तं पद्मं सुभगं–पद्मविशेषः सौगन्धिकं–कल्हारं पुण्डरीकं–श्वेताम्बुजं तदेवातिविशालं महापुण्डरीकं शतपत्रसहस्रपत्रे पत्रसङ्ख्याविशेषावच्छिन्नौ पद्मविशेषौ।

एते च छत्रातिच्छत्रादयः सर्वेऽपि सर्वरत्नमयाः–सर्वात्मना रत्नमयाः 'अच्छा सण्हा' इत्यादि विशेषणजातं पूर्ववत्, 'तस्स ण'मित्यादि, तस्य 'ण'मिति प्राग्वत अशोकवरपादपस्याधस्तात्, 'एत्थ ण'मिति असोकवरपादपस्य यदधो अत्र 'ण'मिति पूर्ववत् एको महान् पृथ्वीशिलापट्टकः प्रज्ञप्तः, कथम्भूत इत्याह– 'इसिंखंधो समल्लीणे' इत्यादि, इह स्कन्धः स्थुडमित्युच्यते, तस्याशोकवरपादपस्य यत् स्थुडं तत् ईषद्–मनाक् सम्यग् लीनस्तदासन्न इत्यर्थः, 'विक्खम्भायासमुप्पमाणे' इति, विष्कम्भेनायामेन च शोभन्म–औचित्यानतिवर्ति प्रमाणं यस्य स विष्कम्भायासमुप्रमाणः।

कृष्णः, कृष्णत्वमेव निरूपयति–'अंजणघणकुवलयहलहरकोसेज्जसरिसो' अञ्जनको–वनस्पतिविशेषः घनो–मेघः कुवलयं–नीलोत्पलं हलधरकौशेयं बलदेववस्त्रं तैः सदृशः–समानवर्णः, 'आगासकेसकज्जलकक्कयणइंदनीलअयसिकुसुमप्पगासे' आकाशं धूलीमेघादिविरहितं, केशाः–

शिरसिजाः, कज्जलं–प्रतीतं, कर्केतनेन्द्रनीलौ–मणिविशेषौ अतसीकुसुमं प्रसिद्धमेतेषामिव प्रकाशो–दीप्तिर्यस्य स तथा, 'भिंगंजणभंगभेयरिट्ठगनीलगुलियगवलाइरेगे' इति भृङ्गः–चतुरिन्द्रियः पक्षिविशेषः अञ्जनं–सौवीराञ्जनं तस्य भङ्गेन विच्छित्या भेदः–छेदोऽञ्जनभङ्गभेदो रिष्ठको–रत्नविशेषः नीलगुटिकाः–प्रतीताः, गवलं–माहिषं शृङ्गं तेभ्योऽपि कृष्णत्वेनातिरेको यस्य स तथा, ।

'भमरनिकुरम्बभूए' इति अत्र भूतशब्द औपम्यवाची, यथाऽयं लाटदेशः सुरलोकभूतः, सुरलोकोपम इत्यर्थः, ततोऽयमर्थः–भ्रमरनिकुरुम्बोपमः, 'जंबुफलअसणकुसुमबंधणनीलुप्पल-पत्तनिकरमरगयआसासगनयणकीयासिवन्ने' जम्बूफलानि प्रतीतानि, असनकुसुमबन्धनं–असनपुष्पवृन्तं नीलोत्पलपत्रनिकरो मरकतमणि प्रतीः, आसासको–बीयकाभिधानो वृक्षः, नयनकीको–नेत्रमध्यताराः, असि–खड्गं तेषामिव वर्णो यस्य स तथा, स्निग्धो न तु रूक्षः घनो–निबिडो न तु कोष्ठक इव मध्यशुषिरः 'अज्झुसिरे' इति श्लक्ष्णशुषिररहितः, 'रूवगपडिरूवगदरिसणिज्जे' इति रूपकाणां यानि तत्र सङ्क्रान्तानि प्रतिबिम्बानि तैः दर्शनीयो रूपकप्रति- रूपकदर्शनीयः ।

आदर्शतलोपमः आदर्शो–दर्पणस्तस्य तलं तेन समतयोपमा यस्य स आदर्शतलोपमः, सुष्ठु मनांसि रमयतीति सुरम्यः 'कृद्बहुल'मिति वचनात् कर्त्तरि यप्रत्ययः, 'सिंहासणसंठिए' इति सिंहासनस्येव संस्थितं संस्थानं यस्य स सिंहासनसंस्थितः, अत एव सुरूपः शोभनं रूपम्–आकारो यस्य स सुरूपः, इतश्च सुरूपो यत आह–'मुत्ताजालखइयंतकम्मे' मुक्ताजालानि–मुक्ताफलसमूहाः खचितानि अन्तर्मसु–प्रान्तप्रदेशेषु यस्य स मुक्ताजालखचितान्तकर्मा, 'आइणगरूयबूरनवनीयतूलफासे' आजिनकं–चर्म्ममयं वस्त्र रूतं–प्रतीतं बूरो–वनस्पतिविशेषः नवनीतं–म्रक्षणं तूलं–अर्कतूलं तेळामिव कोमल तथा स्पर्शो यस्य स आजिनकरूतबूरनव-नीततूलस्पर्श, 'सव्वरयणामए' इत्यादिविशेषणकदम्बकं प्राग्वत् ।

**मू. (४)** *सेओ राया धारिणी देवी, सामी समोसढे, परिसा निग्गया, जाव राया पज्जुवासइ*

**वृ.** ''सेओ राया धारिणी देवी जाव समोसरणं समत्त'मिति तस्यां आमलकल्पायां नगर्यां श्वेतो नाम राजा, तस्य समस्तान्तः–पुरप्रधाना भार्या सकलगुणधारिणी धारिणीनामा देवी, 'जेवा समोसरणं समत्त'मिति यावच्छब्दकरणाद्राजवर्ण्णको देवीवर्ण्णकः समवसरणं चौपपातिकानुसारेण तावद्वक्तव्यं यावत्समवसरणं समाप्तं ।

तच्चैवं–'तत्थ णं आमलकप्पाए नयरीए सेओ नाम राजा होत्था, महयाहिमवंतमहंतम-लयमंदरमहिंदसारे अच्चंतविसुद्धरायकुलवंसप्पसूए निरंतरं रायलक्खणविराइयंगमंगे बहुजणबहुमाणपुइए सव्वगुणसमिद्धे खत्तिए मुइए मुद्धाभिसित्ते माउपिउसुजाए दय(य्व)पत्ते सीमंकरे सीमंधरे खेमंकरे खेमंधरे मणुस्सिंदे जनवयपिया जनवयपाले जनवयपुरोहिए सेउकरे केउकरे नरपवरे पुरिसवरे पुरिससीहे पुरिसवग्घे पुरिसआसीविसे पुरिसवरपोंडरीए पुरिसवरगंधहत्थी अड्ढे दित्ते वित्ते विच्छिन्नविपुलभवणसयनासनजाणवाहणाइन्ने बहुधण-बहुजायरूवरजए आओगपओगसंपउत्ते विच्छड्डिय पउरभत्तपाणे बहुदासीदासगोमहिसगवेलप्पभुए पडिपुन्नजंतकोसकोट्ठागाराउहधरे बहुदुब्बलपच्चामित्ते ओहयकंटयं मलियकंटयं उद्धियकंटयं अप्पडिकंटयं ओहयसत्तुं निहयसत्तुं मलियसत्तुं उद्धियसत्तुं निज्जियसत्तुं पराइयसत्तुं ववगय-

दुब्भिक्खदोसमारिभयविप्पमुक्कं खेमं सिवं सुभिक्खं पसंतडिंबडमरं रज्जं पसासेमाणे विहरइ।

तस्स णं सेयोरन्नो धारिणीनामं देवी होत्था, सुकुमालपाणिपाया अहीनपडिपुन्नपंचिंदियसरीरा लक्खणवंजणगुणोववेया माणुम्माणपमाणपडिपुण्णसुजायसव्वंगसुंदरंगा ससिसोमागारकंतपियदंसणा सुरूवा करयलपरिमियपसत्थतिवलिबलियमज्झा कुंडलुल्लिहिय (पीण) गंडलेहा कोमुइयरयणियरविमलपडिपुन्नसोमवयणा सिंगारागारचारुवेसा संगयगसहसियभणियचिट्ठियविलाससललियसंलावनिउणजुत्तोवयारकुसला सुंदरथणजघनवयणकरचरणनयनायण्णविलासकलिया सेएण रन्ना सद्धिं अनुरत्ता अविरत्ता इट्ठे सद्दफरिसे रसरूवगंधे पंचविहे माणुस्सएकामभोगे पच्चणुभवमामा विहरइ' एष राजदेवीवर्ण्णकः।

अस्य व्याख्या–'महयाहिमवंतेति' महाहिमवान् हैमवतस्य क्षेत्रस्योत्तरतः सीमाकारी वर्षधरपर्वतः मलयः–पर्वतविशेषः सुप्रतीतो मन्दरो–मेरुर्महेन्द्रः–शक्रादिको देवराजस्तद्वत सारः–प्रधानो महाहिमवन्महामलयमन्दरमहेन्द्रसारः, तथा अत्यन्तविशुद्धे राजकुलवंशे प्रसूतोऽत्यन्तविशुद्धराजकुलवंशप्रसूतः, तथा 'निरन्तरं रायलक्खणविराइयंगमंगे' इति निरन्तरम्–अपलक्षणव्यवधानाभावेन राजलक्षणैः–राज्यसूचकैर्लक्षणैर्विराजितानि अङ्गमङ्गानि–अङ्गप्रत्यङ्गानि यस्य स निरन्तरराजलक्षणविराजिताङ्गमङ्गः, तथा बहुभिर्जनैः बहुमानेन–अन्तरङ्गप्रीत्या पूजितो बुजनबहुमानपूजितः, कस्मादित्याह।

'सव्वगुणसमिद्धे' सर्वैं शौर्योपशमादिभिर्गुणैः समृद्धः–स्फीतः– सर्वगुणसमृद्धः ततो बहुजनबहुमानपूजितो, गुणवत्सुप्रायः सर्वेषामपि बहुमानसम्भवात्, तथा 'खत्तिये' इति क्षत्रस्यापत्यं क्षत्रियः 'क्षत्रादिय' इति इयप्रत्ययः, अनेन नवमाष्टमादिनन्दवत् राजकुलप्रसूतोऽपि न हीनजातीयः, किन्तु उत्तमजातीय इत्यावेदितं, तथा 'मुदितः' सर्वकालं हर्षवान्, प्रत्यनीकोपद्रवासम्भवात्, तदसम्भवस्च प्रत्यनीकानामेवाभावात्, तथा चाह–'मुद्धाभिसित्ते' प्रायः सर्वैरपि प्रत्यन्तराजैः प्रतापमसहमानैर्नान्यथाऽस्माकं गतिरिति परिभाव्य मूर्द्धभि मस्तकैरभिषिक्तः–पूजितो मूर्धाभिषिक्तः, तथामातृपितृभ्यां सुजातो मातृपितृसुजातः, अनेन समस्तगर्भाधानप्रभृतिसम्भविदोषविकल इत्यावेदितः, तथा दया(द्रव्य)प्राप्तः स्वभावतः सुद्धजीवद्रव्यत्वाद्।

तथा सेवागतानामपूर्वापूर्व्वनृपाणां सीमां–मर्यादां करोति यथा एवं वर्त्तितव्यमेवं नेति सीमङ्करः, तथा पूर्वपुरुषपरम्परायतां स्वदेशप्रवर्त्तमानां सीमां–मर्यादां धारयति–पालयति न तु विलुम्पतीति सीमन्धरः, तता क्षेमं–वशवर्त्तिनां उपद्रवाभावं करोति क्षेमङ्करः चौरादिसंहारात् तथा तत् धारयति आरक्षकनियोजनात् क्षेमन्धरः, अत एव मनुष्येनद्र, तथा जनपदस्य पितेव जनपदपिता, कथं पितेवेत्यत आह–'जनपदपालः' जनपदं पालयतीति जनपदपालः, ततो भवति जनपदस्य पितेव, तथा जनपदस्य शान्तिकरितया पुरोहित इह जनपदपुरोहितः, तथा सेतुः–मार्गस्तं करोतीती सेतुकरः, मार्गदेशक इति भावः, केतुः–चिह्नं तत्करोतीति केतुकरः, अद्भुतसंविधानकारीति भावः, तथा नरेषु मनुष्येषु मध्ये प्रवरो–नरप्रवरः स च सामान्यमनुष्यापेक्षयापि स्यादत आह–

'पुरिसवरे' पुरुषेषु–पुरुषाभिमानानेषु मध्ये वरः–प्रधान उत्तमपौरुषोपेतत्वादिति पुरुषवरः, यतः पुरुषः सिंह इवातिमत्ततया पुरुषसिंहः, तथा पुरुषो व्याघ्र इव शूरतया पुरुषव्याघ्रः, पुरुष आसीविष इव दोषविनाशनशीलतया पुरुषासीविषः पुरुषः वरपुण्डरीकमिवोत्तमतया

भुवनसरोवरभूषकत्वात् पुरुषवरपुण्डरीकः, पुरुषः वरगन्धहस्तीव परानसहमानान् प्रतीति पुरुषवरगन्धहस्ती ततो भवति पुरुषवरः, तथा आढयः–समृद्धो दीप्तः शरीरत्वचा देदीप्यमानत्वात् दप्तो वा दप्तारिमानमर्दनशीलत्वात् अत एव वित्तो–जगत्प्रतीतो, यदुक्तमाढय इति तदेव सावस्तिरमुपदर्शयति–'विच्छिन्ने'त्यादि, विस्तीर्णानि विस्तारवन्ति विपुलानि–प्रभूतानि भवनानि–गृहाणि शयनानि आसनानि च प्रतीतानि यानानि–रथादीनि वाहनानि–अश्वादीनि एतैराकीर्णो–व्याप्तो युक्तो विस्तीर्णविपुलभवनशयनासनयानवाहनाकीर्ण्णः।

तथा बहुधनं बहुजातरूपं–सुवर्ण्णं रजतं च–रूप्यं यस्य स बहुधनबहुजातरूपरजतः, तथा आयोगप्रयोगसम्प्रयुक्तः–आवाहनविसर्जनकुशलः, तथा विच्छर्दितं–तथाविध-विशिष्टो-प्रकाराकारितया विसृष्टमुकुरिटकादिषु प्रचुरं भक्तपानं यस्मिन् राज्यमनुशासति स विच्छर्दित-प्रचुरभक्तपानः, अनेन पुण्याधिकतया न तस्मिन् राज्यमनुशासति दुर्भिक्षमभूदिति कथितं, तथा बहूनां दासीनां दासानां गवां–बलीवर्दानां महिषाणां गवां–स्त्रीगवानां एडकानां च प्रभुः बहुदासीदासगोमहिषगवेलगप्रभुः, ततः स्वार्थिकप्रत्ययविधानात् प्रभुकः, तथा परिपूर्णानि–भृतानि यन्त्रकोशकोष्ठागाराणि यन्त्रगृहाणि कोशगृहाणि–भाण्डागाराणि कोष्ठगृहाणि–धान्यानां कोष्ठागाराणि गृहाणि इति भावः, आयुधगृहाणि च यस्य स प्रतिपूर्णयन्त्रकोशकोष्ठागारायुधगृहः

तथा बलं शारीरिकं मानसिकं च यस्यास्ति स बलवान्, दुर्बलप्रत्ययमित्रो, दुर्बलानाम-कारणवत्सल इति भावः, एवंभूतः सन् राज्यं प्रशासत् विहरति–अवतिष्ठते इति योगः, कथम्भूत राज्यमित्याह–अपहतकण्टकं, इह देशोपद्रवकारिणश्चरटाः कण्टकाः ते अपहता अवकाशाना-सादनेन स्थगिता यस्मिन् तत् अपहतकण्टकं, तथा मलिताः– उपद्रवं कुर्वाणा मानम्लानिमापादिताः कण्टका यत्र तन्मलितकण्टकं, तथा उद्ध ताः स्वदेशत्याजनेन जीवितत्याजनेन वा कण्टका यत्र तत् उद्ध तकण्टकं, तथा न विद्यते प्रतिमल्लः कण्टको यत्र तदप्रतिमल्लकण्टकं, तथा 'ओहयसत्तुं' इति प्रत्यनीकाः राजानः शत्रवस्ते अपहताः स्वावकाशमलभमानीकृता यत्र तत् अपहतशत्रु तथा निहताः–रणाङ्गणे पातिताः शत्रवो यत्र तन्निहतशत्रु।

तथा मलिताः तद्गतसैन्यत्रासापादनतो मानम्लानिमापादिताः शत्रवो यत्र तत् मलितशत्रु, तथा स्वातन्त्र्यच्यावनेन स्वदेशच्यावनेन जीवितच्यावनेन वा उद्ध ताः शत्रवो यत्र तत् उद्धतशत्रु, एतदेव विशेषणद्वयेन व्याचष्टे–निर्जितशत्रु, पराजितशत्रु, तथा व्यपगतं दुर्भिक्षं दोषो मारिश्च यत्र तत् व्यपगतदुर्भिक्षदोषमारि तथा भयेन स्वदेशोत्थेन परचक्रकृतेन वा विप्रमुक्तं, अत एव क्षेमं–निरुपद्रवं शिवं–शान्तं सुभिक्षं शोभना–शुभाभिक्षा दर्शनिनां दीनानाथादीनां च यत्र तत् सुभिक्षं, तथा प्रशान्तानि डिम्बानि–विघ्ना डमराणि–राजकुमारादिकृतविकृतविड्वरा यत्र तत्प्रशान्तडिम्बडमरं। देवीवर्णकं–'सुकुमालपाणिपाया' इति सुकुमारौ पाणी पादौ च यस्याः सा सुकुमारपाणिपादा, तथा अनानि अन्यूनानि स्वरूपतः प्रतिपूर्णानि लक्षणतः पञ्चापीन्द्रियाणि यस्मिन् तथाविधं शरीरं यस्याः सा अहीनप्रतिपूर्णपञ्चेन्द्रियशरीरा, तथा लक्षणानि–स्वस्तिकचक्र-दीनि व्यञ्जनानि–मषीतिलकादीनि गुणाः–सौभाग्यादयस्तैरुपपेता लक्षणव्यञ्जनगुणोपपेता, उप अप इत इतिशब्दत्रयस्थाने 'पृषोदरादय' इत्यपाकारस्य लोपे उपपेता इति द्रष्टव्यं, 'माणुम्माण-पमाणपडिपुण्णसुजायसव्वंगसुंदरंगी' इति तत्र मानं–जलद्रोणप्रमाणता, कथमिति चेत्।

उच्यते, जलस्यातिभृते कुण्डे पुरुषे स्त्रियां वा निवेशितायां यज्जलं निस्सरति तद्यदि द्रोणप्रमाणं भवति तदा पुरुषः स्त्री वा मानप्राप्त उच्यते, तथा उन्मानं—अर्द्धभारप्रमाणता, सा चैवं—तुलायामारोपितः पुरुषः स्त्री वा यद्यर्द्धभारं लति तदा स उन्मानप्राप्तोऽभिधीयते, प्रमाणं—स्वाङ्गुलेनाष्टोत्तरशतोच्छ्रयिता, ततो मानोन्मानप्रमाणैः प्रतिपूर्णानि—अन्यूनानि सुजातानि जन्मदोषरहितानि—अरौद्राकारं कान्तं—कमनीयं प्रियं—द्रष्टणामानन्दोत्पादकं दर्शनं—रूपं यस्याः सा शशिसोमाकारकान्तप्रियदर्शना, अत एव सुरूपा, तथा करतलपरिमितो—मुष्टिग्राह्यः प्रशस्तलक्षणोपेतस्त्रिवलीको बलिवयोपेतो रेखात्रयोपेतो बलिको—बलवान मध्योमध्यमागो यस्याः सा करतलपरिमितप्रशस्तत्रिवलीक बलिकमध्या।

तथा कुण्डलाभ्या उल्लिखिता—घृष्टा गण्डलेखा—कपोलविरचितमृगमदादिरेखा यस्याः सा कुण्डलोल्लिखितगण्डलेखा, 'कोमुईयरयणियरविमलपडिपुन्नसोमवयणा' कौमुदी—कार्त्तिकीपौर्णमासी तस्यां रजनिकरः—चंद्रमास्तद्वद्विमलं—निर्मलं प्रतिपूर्णम्—अन्यूनातिरिक्तमानं सौम्यम्—अरौद्राकारं वदनं यस्याः सा तथा, शृङ्गारस्य रसविशेषस्यागारमिवागारं, अथवा शृङ्गारो—मण्डनभूषणाटोपस्तत्प्रधान आकारः—आकृतिर्यस्याः सा तथा, चारु वेषो—नेपथ्यं यस्याः सा तथा, ततः कर्मधारयः, शृङ्गारागारचारुवेषा, तथा सङ्गता ये गतहसितभणितचेष्टितविलासललितसंलापनिपुणयुक्तोपचारकुशला, तत्र सङ्गतं नासङ्गतं गतं यदगुप्ततया तद्गृहस्यैवान्तर्गमनं न तु बहि स्वेच्छचारितया सङ्गतं हसितं—यत्करपोलविकाशमात्रसूचितं न त्वट्टहासादि 'हसियं कपोलकहकहिय' मिति वचनात्।,

सङ्गतं भणितं यत्समागते प्रयोजने नर्मभाणितिपरिहारेण विवक्षितार्थमात्रप्रतिपादनं सङ्गतं चेष्टितं यत्कुचजघनाद्यवयवाच्छादनपरतयोपवेशनशयनोत्थानादि सङ्गतो विलासःस्वकुलौचित्येन शृङ्गारादिकरणं, तथा सुन्दरी स्तनजघनवदनकरचरणनयनलावण्यविलासैः कलिता, अत्र विलासः—स्थानासनगमनादिरूपश्चेष्टाविशेषः, उक्तं च—

॥ १ ॥ "स्थानासनगमनानां, हस्तभ्रूनेत्रकर्मणां चैव।
उत्पद्यते विशेषो यः श्लिष्टोऽसौ विलासः स्यात्॥"
—अन्ये त्वाहुः—विलासो नेत्रजो विकारः, तथा चोक्तं—
॥ १ ॥ "हावो मुखविकारः स्यात्, भावश्चित्तसमुद्भवः।
विलासो नेत्रजो ज्ञेयो, विभ्रमो भ्रूसमुद्भवः॥"

*ते णं कालेणं ते णं समएणं समणे भगवं महावीरे जाव चउतीसबुद्धवयणाइसेससंपत्ते पणतीससच्चवयणातिसेससंपत्ते आगासगएणं चक्केणं आगासगतेणं छत्तेणं आगासगयाहिं सेयचामराहिं आगासफालिहमएणं सपायपीढेण सीहासणेण पुरतो धम्मज्झएणं पगढिज्जमाणेणं चउदसहिं समणसाहस्सीहिं छत्तीसाए अज्जियासहस्सीहिं सद्धिं सम्परिवुडे पुव्वाणुपुव्विं चरमाणे गामाणुगामं दुइज्जमाणे सुहं सुहेणं विहरमाणे जेणेव आमलकप्पा नयरी जेणेव वनसंडे जेणेव असोगवरपायवे जेणेव पुढविसिलापट्टे तेणेव उवागच्छइ, २ ता अहापडिरूवं उग्गहं उग्गिण्हिता असोगरपायवस्स अह पुढविसिलापट्टगंसि पुरत्थाभिमुहे संपलिअंकनिसन्ने संजमेणं तवसा अप्पाणं भावेमाणे विहरति"।*

इदं सुगमं, नवं 'जाव चोत्तीसाए' इत्यत्र यावच्छब्दकरणात् 'आइकरे तित्थगरे' इत्यादिकः समस्तोऽपि औपपातिकग्रन्थप्रसिद्धो भगवद्वर्णको ज्ञातव्यः, स च विस्तरभीतेरिति न लिख्यते, केवलमौपपातिकग्रन्थादवसेयः, 'चोत्तीसाए बुद्धवयणातिसेससंपत्ते' चतुस्त्रिंशद् बुद्धानां-भगवतामर्हतां वचनप्रमुखाः 'सर्वस्वभाषा,नुगतं वचनं धर्मावबोधकर'मित्यादिना उक्तस्वरूपा ये अतिशेषा- अतिशयास्तान् प्राप्तश्चतुस्त्रिंशद्बुद्धवचनातिशेषसम्प्राप्तः, इह वचनातिशेषस्यो-पादानमत्यन्तोप- कारितया प्राधान्यख्यापनार्थम्, अन्यता देहवैमल्यादयस्ते पठ्यन्ते, तथा (चाह)

॥१॥ देहं विमलसुगन्धं आमयपस्सेयवज्जियं अरयं।
रुहिरं गोक्खीराभं निव्विस्सं पंडुरं मंसं ॥ मित्यादि।

'पणतीसाए सच्चवयणातिसेससंपत्ते' पञ्चत्रिंशत् ये सत्यवचनस्यातिशेषा-अतिशयास्तान सम्प्राप्तः पञ्चत्रिंशद्वचनातिशेषसम्प्राप्तः, ते चामी सत्यवचनातिशेषाः संस्कारवत्वं १ उदात्तत्वं २ उपचारोपेतत्वं ३ गम्भीरशब्दत्वं ४ अनुनादित्वं ५ दक्षिणत्वं ६ उपनीतरागत्वं ७ महार्थत्वं ८ अव्याहतपौर्वापर्यत्वं ९ शिष्टत्वं १० असन्दिग्धत्वं ११ अपहृतान्योत्तरत्वं १२ हृदयग्राहित्वं १३ देशकालयुतत्वं १४ तत्वानुरूपत्वं १५ अप्रकीर्णप्रसृतत्वं १६ अन्योऽन्यगृहीतत्वं १७ अभिजातत्वं १८ अतिस्निग्धमधुरत्वं १९ अपरमर्मवेधित्वं २० अर्थधर्माभ्यासानपेतत्वं २१ उदारत्वं २२ परनिन्दात्मोत्कर्षविप्रमुक्तत्वं २३ उपगतश्लाघत्वं २४ अनपनीतत्वं २५ उत्पादिताविच्छिन्न-कौतूहलत्वं २६ अद्भुतत्वं २७ अनतिविलम्बित्वं २८ विभ्रमविक्षेपकिलिकिंचितादिवियुक्तत्वं २९ अनेकजातिसंश्रयाद्विचित्रत्वं ३० आहितविशेषत्वं ३१ साकारत्वं ३२ सत्वपरिगृहीतत्वं ३३ अपरिखेदितत्वं ३४ अव्युच्छेदित्वं ३५ चेति,।

तत्र संस्कारवत्वं संस्कृतादिलक्षणयुक्तत्वं, उदात्तत्वं उच्चैर्वृत्तिता उपचारोपेतत्वम्-अग्राम्यता, गम्भीरशब्दत्वं मेघस्येव, अनुनादिता प्रतिरवोपेतत्वं, दक्षिणत्वं सरलता, उपनीत-रागत्वं-उत्पादिता श्रोतृजन स्वविषयबहुमानता, एते सप्त शब्दापेक्षा अतिशयाः, अत उर्द्ध त्वर्थाश्रयाः, तत्र महार्थत्वं-परिपुष्टार्थाभिधायिता, अव्याहतपौर्वापर्यत्वं-पूर्वापर- वाक्याविरोधः, शिष्टत्वं वक्तुः शिष्टत्वसूचनात्, असन्दिग्धत्वं परिस्फुटार्थप्रतिपादनात, अपहृता- न्योत्तरत्वं-परदूषणाविषयता, हृदयग्राहित्वं-दुर्गमस्याप्यर्थस्य परहृदये प्रवेशकरणं, देशकालाव्य- तीतत्वं प्रस्तावोचितता, तत्वानुरूपत्वं-विवक्षितवस्तुस्वरूपानुसारिता, अप्रकीर्ण्णप्रसृतत्वं-सम्बन्धाधिकारपरिमितता, अन्योऽन्यप्रगृहीतत्वं-पदानां वाक्यानां वा परस्परसापेक्षता, अभिजातत्वं-यथाविवक्षितार्थाभिदानशीलता, अतिस्निग्धमधुरत्वं-बुभुक्षितस्य घृतगुडादिवत्पर-मसुखकारिता।

अपरमर्मवेध्यत्वं-परमर्मानुद्घाटनशीलता, अर्थधर्माभ्यासानपेतत्वं-अर्थधर्मप्रतिबद्धता, उदारत्वं-अतिविशिष्टगुम्फगुणयुक्तता अतुच्छार्थप्रतिपादकता वा, परनिन्दात्मोत्कर्षविप्रयुक्तत्वं प्रतीतं, उपगतश्लाघत्वं उक्तगुणयोगतः परासश्लाघता, अनुपनीतत्वं-कारककालवच-नलिङ्गादिव्यत्ययरूपवचनदोषापेतता, उत्पादिताविच्छिन्नकुतूहलत्वं श्रोतृणां स्वविषये उत्पादितं-जनितमविच्छिन्नं कौतूहलं-कौतुकं येन तत्तथा तद्भावस्तत्वं श्रोतृषु स्वविषयाद्भुतविस्मयाकारितेति भावः, अद्भुतत्वमनतिविलम्बित्वं च प्रतीतं, विभ्रमविक्षेपकिलिकि-

श्चितादिवियुक्तत्वमिति--विभ्रमो--वक्तुर्भ्रान्तमनस्कता विक्षेपो--वक्तुरेवाभिधेयार्थ प्रत्यनासक्तताकिलिकिञ्चितं--रोषभयलोभादिभावानां युगपदसकृत्करणं आदिशब्दान्मनोदोषान्तरपरिग्रहः तैर्वियुक्तं यत्तत्तथा तद्भावस्तत्त्वं ।

अनेकजातिसंश्रयाद्विचित्रत्वं--सर्वभाषानुयायितया चित्ररूपता, आहितविशेषत्वं शेषपुरुषवचनापेक्षया शिष्येषूत्पादितमतिविशेषता, साकारत्वं--विच्छिन्नपदवाक्यता, सत्वपरिगृहीतत्वम्--ओजस्विता, अपरिखेदित्वम्--अनायाससम्भवात्, अव्यवच्छेदित्वं विवक्षितार्थसम्यकसिद्धिं यावदविच्छिन्नवचनप्रमेयतेति । 'आगासफालियामएणं' आकाशस्फटिकं--यदाकाशवत् अतिस्वच्छफटिकं तन्मयेन 'धम्मज्झएणं'ति धर्मचक्रवर्तित्वसूचकेन केतुवना महेन्द्रध्वजेनेत्यर्थः ।

तथा 'पुव्वाणुपुव्विं चरमाणे' इति पूर्वानुपूर्व्या क्रमेणेत्यर्थ चरन्--सञ्चरन्, एतदेवाह--'गामाणुगामं दूइज्जमाणे' इति ग्रामश्चानुग्रामश्च--विवक्षितग्रामादनन्तरं ग्रामो ग्रमानुगामं, तत् द्रवन् गच्छन्, एकस्मादनन्तरं ग्राममनुल्लङ्घयन् इत्यर्थः, अनेनाप्रतिबद्धविहारिता ख्यापिता, तत्राप्यौत्सुक्याभावमाह--'सुहंसुहेणं विहरमाणे' सुखंसुखेन--शरीरखेदाभावेन संयमबाधाविरहेण च ग्रामादिषु विहरन्--अवतिष्ठमानो 'जेणेव'त्ति प्राकृतत्वात्सप्तम्यर्थे तृतीया यस्मिन्नेव देशे आमलकल्पा नगरी यस्मिन्नेव च प्रदेशे वनखण्डो यस्मिन्नेव देशे सोऽनन्तरोक्तस्वरूपः शिलापट्टकः

'तेणामेवे'ति तस्मिन्नेव देशे उपागच्छति, उपागत्य च पृथिवीशिलापट्टके पूर्वाभिमुखः, तीर्थकृतो हि भगवन्तः सदा समवसरणे पृथिवीशिलापट्टके वा देशनायै पूर्वाभिमुखा अवतिष्ठन्ते संपर्यङ्कनिषण्णाः, संयमने तपसा चात्मानं भावयन् विहरन् आस्ते ।। ततः वर्षानिर्गमो वाच्यः, स चैवं--'तए णं आमलकप्पानयरीए सिंघाडगतियचउक्कचच्चरचउम्मुहमहापहेसु बहुजणो अन्नमन्नं एवमाइक्खइ एवं भासेइ एवं पन्नवेइ एवं परूवेइ ।

एवं खलु देवाणुप्पिया ! समणे भगवं महावीरे जाव आगासगएणं छत्तेणं जाव संजमेणं तवसा अप्पाणं भावेमाणे विहरति, तं महाफलं खलु देवाणुप्पियाणं तहारूवाणं अरहंताणं नामगोयस्सवि सवणयाए किमंग पुण अभिगमनवंदननमंसणपडिपुच्छणपज्जुवासणयाए ?, तं सेयं खलु एगस्सवि आयरियस्स धम्मियस्स सुवयणस्स सवणयाए, किमंग पुन विउलस्स अट्ठस्स गहणयाए ?, तं गच्छामो णं देवाणुप्पिया ! समणं भगवं महावीरं वंदामो नमंसामो सक्कारेमो सम्माणेमो कल्लाणं मंगलं देवयं चेइयं पज्जुवासेमो, एवं तं इहभवे परभवे य हियाए आणुगामियत्ताए भविस्सइ, तए णं आमलकप्पाए नयरीए बहवे उग्गा भोगा' इत्याद्यौपपातिकग्रन्थोक्तं सर्वमवसातव्यं यावत् समग्राऽपि राजप्रभृतिका परिषत्पर्युपासीना अवतिष्ठते ।

**मू. (५)** *ते णं काले णं ते णं समए णं सूरियाभे देवे सोहम्मे कप्पे सूरियाभे विमाणे सभाए सुहम्माए सूरियाभंसि सिंहासणंसि चउहिं सामाणियसाहस्सीहिं चउहिं अग्गमहिसीहिं सपरिवाराहिं तहिं परिसाहिं सत्तहिं अनियाहिं सत्तहिं अनियाहिवईहिं सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहि य बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे महयाऽऽहयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुप्पवादियरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरति । इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे २ पासति ।*

वृ. 'ते णं काले णं' मित्यादि, ते इति प्राकृतशैलीवशात्तस्मिन्निति द्रष्टव्यं, यस्मिन्काले भगवन् वर्द्धमानस्वामी साक्षाद्विहरति तस्मिन्काले 'ते णं समए णं' ति तस्मिन् समये यस्मिन्नवसरे भगवानाम्रशालवने चैत्ये देशनां कृत्वोपरतस्तस्मिन्नवसरे इति भावः, सूर्याभो नाम्ना देवो, नामशब्दो ह्यव्ययरूपोऽप्यस्ति, ततो विभक्तिलोपः, ततो सौधर्माख्ये कल्पे यत्सूर्याभनामकं विमानं तस्मिन्, या सभा सुधर्माभिधा तस्यां यत्सूर्याभाभिधानं सिंहासनं तत्रोपविष्टः सन्निति गम्यते, 'चउहिं सामाणियसाहस्सीहिं' इति समाधुने तिविभवादी भवाः सामानिकाः, अध्यात्मादित्वादिकण्, विमानाधिपतेः सूर्याभदेवस्य समद्युतिविभवादिका देवा इत्यर्थः ।

ते च मातृपितृगुरूपाध्यायमहत्तरवत्सूर्याभदेवस्य पूजनीयाः, केवलविमानाधिपतित्वहीना इति सूर्याभं देवं स्वामिनं प्रतिपन्नाः, तेषां सहस्राणि सामानिकसहस्राणि तैश्चतुर्भि, प्राकृतत्वाच्च सूत्रे सकारस्य दीर्घत्वं स्त्रीत्वं, च, 'चतसृभिरग्रमहिषीभिः' इह कृताभिषेका देवी महिषीत्युच्यते, सा च स्वपरिवारभूतानां सर्वासामपि देवीनामग्रे इत्यग्राः, अग्राश्च ता महिष्यश्च अग्रमहिष्यस्ताभिश्चतसृभि, कथम्भूताभिरित्याह—'सपरिवाराभि' परिवारः सह यासां ताः सपरिवारास्ताभि, परिवारश्चैकैकस्या देव्याः सहस्र २ देवीनां, तथा तिसृभि पर्षद्भि, तिस्रो हि विमानाधिपतेः सर्वस्यापि पर्षदः । तद्यथा—अभ्यन्तरा मध्या बाह्या च, तत्र या वयस्यमण्डलीकस्थानीया परममित्रसंहतिसदृशी सा अभ्यन्तरपर्षत्, तया सहापर्यालोचितं स्वल्पमपि प्रयोजनं न विदधाति, अभ्यन्तरपर्षदा सह पर्यालोचितं यस्यै निवेद्यते यथेदमस्माकं पर्यालोचितं सम्मतमागतं युष्माकमपीदं सम्मतं किंवा नेति सा मध्यमा, यस्याः पुनरभ्यन्तरपर्षदा सह पर्यालोचितं मध्यमया च सह दृढीकृतं यस्यै करणायैव निरूप्यते यथेदं क्रियतामिति सा बाह्या, तथा 'सत्तहिं अणिएहिं' इति अनीकानि—सैन्यानि, तानि च सप्त, तद्यथा ।

हयानीकं गजानीकं रथानीकं पदात्यनीकं वृषभानीकं गन्धर्वानीकं गन्धर्वानीकं नाट्यानीकं, तत्राद्यानि पञ्चानीकानि सङ्ग्रामाय कल्प्यन्ते, गन्धर्वनाट्यानीके पुनरुपभोगाय, तैः सप्तभिरनीकैः, अनीकानि स्वस्याधिपतिव्यतिरेकेण न सम्यक् प्रयोजने समागते सत्युपकल्प्यन्ते ततः सप्तानीकाधिपतयोऽपि तस्य वेदितव्याः, तथा चाह— 'सत्तहिं अनियाहिवईहिं,' तथा 'षोडशभिरात्मरक्षदेवसहस्र' रिति विमानाधिपतेः सूर्याभस्य देवस्यात्मानं रक्षयन्तीत्यात्मरक्षा, 'कर्मणोऽणि' त्यण् प्रत्ययः, ते च शिरस्त्राणकल्पाः यथा हि शिरस्त्राणं शिरस्याविद्धं प्राणरक्षकं भवति तथा तेऽप्यात्मरक्षका गृहीतधनुर्दण्डादिप्रहरणाः समन्ततः पृष्ठतः पार्श्वतोऽग्रतश्चावस्थायिनो विमानाधिपतेः सूर्याभस्य देवस्य प्राणरक्षकाः, देवानामपायाभावात् तेषां तथाग्रहणपुरस्सरमवस्थानं निरर्थकमिति चेत्, न स्थितमात्रपरिपालनहेतुत्वात् प्रकर्षहेतुत्वाच्च ।

तथा हि ते समन्ततः सर्वासु दिक्षु गृहीतप्रहरणा ऊर्द्धस्थिता अवतिष्ठमानाः स्वनायकशरीररक्षणपरायणाः स्वनायकैकनिषण्णदृष्टयः परेषामसहमानानां क्षोभमापादयन्तो जनयन्ति स्वनायकस्य परां प्रीतिमिति, एते च नियतसङ्ख्याकाः सूर्याभस्य देवस्य परिवारभूता देवा उक्ताः, ये तु तस्मिन् सूर्याभे विमाने पौरजनपदस्थानीया ये त्वाभियोग्याः—दासकल्पास्तेऽतिभूयांसः आस्थानमण्डल्यामपि चानियतसङ्ख्याका इतितेषां सामान्यत उपादानमाह—'अन्नेहिं बहूहिं

सूरियाभविमानवासीहिं देवेहिं देवीहि य सद्धिं संपरिवुडे' एतैः सामानिकप्रभृतिभि सार्द्धं संपरिवृतः–सम्यग्नायकैकचित्ताराधनपरतया परिवृतः, 'महयाऽऽहये'त्यादि, महतारवेणेति योगः 'आहया' इति आख्यानकप्रतिबद्धानीति वृद्धाः, अथवा अहतानि–अव्याहतानि, अक्षतानीति भावः।

नाट्यगीतवादीतानि च तन्त्री–वीणा तला–हस्तताला: कंसिका: तुटितानि–शेषतूर्याणि, तथा घनो–घनसदृशो ध्वनिसाधर्म्यत्वात् यो मृदङ्गो मर्द्दलः पटुना–दक्षपुरुषेण प्रवादितः, तत एतेषां पदानां द्वन्द्वः, तेषां यो रवस्तेन, दिव्यान्–दिवि भवान् अतिप्रधानानित्यर्थ, 'भोगभोगाइं' इति भोगार्हा ये भोगाः–शब्दादयस्तान्, सूत्रे नपुंसकता प्राकृतत्वात्, प्राकृते हि लिङ्गव्यभिचारः यदाह पाणिनि स्वप्राकृतलक्षणे–'लिङ्गं व्यभिचार्यपी'ति, भुञ्जानो 'विहरति' आस्ते, न केवलमास्ते किंत्विमं–प्रत्यक्षतया उपलभ्यमानं 'केवलकल्पं' ईषदपरिसमाप्तं केवलं–केवलज्ञानं केवलकल्पं, परिपूर्णतया केवलसदृशमिति भावः।

जम्ब्वा रत्नमय्यां उत्तरकुरुवासिन्या उपलक्षितो द्वीपो जम्बूद्वीपस्तं जम्बूद्वीपाभिधानं द्वीपं 'विपुलेन' [illegible] प्रथमा पृथिवीं यावत्तिर्यक् असङ्ख्येयान् द्वीपसमुद्रानिति भवति विस्तीर्णस्तेनाभोगयन्–परिभावयन् पश्यति, अनेन सत्यप्यवधौ यदि तं ज्ञेयविषयमाभोगं न करोति तदा न किञ्चिदपि तेन जानाति पश्यति वेत्यावेदितं

मू. (५-वर्तते) *तत्थ समणं भगवं महावीरं जंबुद्दीवे भारहे वासे आमलकप्पाए नयरीए बहिया अंबसालवने चेइए अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणं पासति, पासित्ता हट्ठतुट्ठचित्तमानंदिए नंदिए पीइमणे परमसोमणस्सिए हरिसवसविसप्पमाणहियए विकसिय- वरकमलणयणे पयलियवरकडगतुडियकेउरमउडकुंडलहारविरायंतरइयवच्छे पालंबपलंब- माणघोलंतभूसणधरे ससंभमं तुरियचवलं सुरवरे (जाव) (सीहासणाओ अब्भुट्ठेइ २ त्ता पायपीढाओ पच्चोरुहति, २ त्ता एगसाडियं उत्तरासंगं करेति, २ त्ता सत्तट्ठपयाइं तित्थयराभिमुहे अनुगच्छति, २ त्ता वामं जाणुं अंचेति, २ त्ता दाहिणं जाणुं धरणितलंसि णिहट्टु तिक्खुत्तो मुद्दाणं धरणितलंसि निवेसेइ निवेसित्ता ईसिं पच्चुन्नमइ, ईसिं पच्चुन्नमइत्ता करतलपरिग्गहियं दसणहं सिरसावत्तं मत्थए अंजलिं कट्टु एवं वयासी–*

*नमोऽत्थु णं अरिहंताणं भगवंताणं आदिगराणं तित्थगराणं सयंसंबुद्धाणं पुरिसोत्तमाणं पुरिससीहाणं पुरिसवरपुंडरयाणं पुरिसवरगंधहत्थीणं लोगुत्तमाणं लोगनाहाणं लोगहिआणं लोगपईवाणं लोगपज्जोयगराणं अभयदयाणं चक्खुदयाणं मग्गदयाणं जीवदयाणं सरणदयाणं बोहिदयाणं धम्मदयाणं धम्मदेसयाणं धम्मनायगाणं धम्मसारहीणं धम्मवरचाउरंतचक्कवट्टीणं अप्पडिहयवरनाणदंसणधराणं वियट्टछउमाणं जिणाणं जावयाणं तिन्नाणं तारयाणं बुद्धाणं बोहयाणं मुत्ताणं मोयगाणं सव्वन्नूणं सव्वदरसीणं सिवमयलमरुयमनंतमक्खयमव्वाबाह- मपुनरावत्तं सिद्धिगइनामधेयं ठाणं संपत्ताणं।*

*नमोऽत्थु णं समणस्स भगवओ महावीरस्स जाव संपाविउकामस्स, वंदामि णं भगवन्तं तत्थगयं इह गते) पासइ मे भगवं तत्थ गते इहगतंतिकट्टु वंदति णमंसति वंदित्ता नमंसित्ता सीहासणवरगए पुव्वाभिमुहं सन्निसन्ने।*

रुधिरं, वराहः सूकरस्तस्य रुधिरं, मनुष्यरुधिरं महिषरुधिरं च प्रतीतं, एतानि हि किल शेषरुधिरेभ्यो लोहितवर्णोत्कटानि भवन्ति तत एतेषामुपादानं, बालेन्द्रगोपकः–सद्योजातेन्द्रगोपकः स हि प्रवृद्धः सन्निषत्पाण्डुरो रक्तो भवति ततो बालग्रहणं, इन्द्रगोपकः–प्रथमप्रावृट्कालभावी कीट-विशेषः, बालदिवाकरः–प्रथममुद्गच्छन् सूर्य, सन्ध्याभ्ररागो–वर्षासु सन्ध्यासमयभावी अभ्ररागः, गुञ्जा–लोकप्रतीता तस्यार्द्धे रागो गुञ्जार्द्धरागः, गुञ्जाया हि अर्द्धमतिरक्तं भवति अर्द्धं चातिकृष्णमिति गुञ्जार्द्धग्रहणं, जपाकुसुमकिंसुककुसुमपारिजातकुसुमजात्यहिङ्गुला लोकप्रसिद्धाः, शिलाप्रवालं–प्रवालनामा रत्नविशेषः प्रवालाङ्कुरः–तस्यैव रत्नविशेषस्य प्रवालस्याङ्कुरः, स हि तत्प्रथमोद्गतत्वेनात्यन्तरक्तो भवति ततस्तदुपादानं, लोहिताक्षमणिर्नाम रत्नविशेषः, लाक्षारसकृमिरागरक्तकम्बलचीनपिष्टराशिरक्तोत्पलरक्ताशोककणवीररक्तबन्धुजीवाः प्रतीताः, 'भवेयारूवे' इत्यादि प्राग्वत् ।

'तत्थ णमि'त्यादि, 'तत्र' तेषां मणीनां मध्ये ये हरिद्रा मणयस्तेषामेतद्रूपो वर्णावासः प्रज्ञप्तः, तद्यथा 'से जहानामए' इत्यादि, स यथानाम चम्पकः समामान्यतः सुवर्णचम्पको वृक्षः, चम्पकच्छल्ली–सुवर्णचम्पकत्वक्, चम्पकभेदः– सुवर्णचम्पकच्छेदः, हरिद्रा प्रतीता, हरिद्राभेदो–हरिद्राच्छेदः, हरिद्रागुटिका–हरिद्रासारनिर्वर्तिता गुटिका, हरितालिका–पृथिवीविकाररूपा प्रतीता हरितालिकाभेदो–हरितालिकाच्छेदः, हरितालिकागुटिका–हरितालिकासारनिर्वर्तिता गुलिका, चिकुरो–रागद्रव्यविशेषः, चिकुराङ्गरागः–चिकुरसंयोगनिर्मितो वस्त्रादौ रागः, वरकनकस्य–जात्यसुवर्णस्य यः कषपट्टके निघर्षः स वरकनकनिघर्षः वरपुरुषोः वासुदेवस्तस्य वसनं वरपुरुषवसनं, तद्ध किल पीतमेव भवतीति तदुपादानं, अल्लकीकुसुमं लोकतोऽवसेयं, चम्पककुसुमं– सुवर्णचम्प-कपुष्पं कूष्माण्डीकुसुमं–पुष्पफलीकुसुमं, कोरण्टकः–पुष्पजातिविशेषः तस्य दाम कोरण्टकदाम तडवडा–आउली तस्याः कुसुमं तडवडाकुसुमं, घोशातकीकुसुमं सुवर्णयूथिकाकुसुमं च प्रतीतं च प्रतीतं, सुहिरण्यका–वनस्पतिविशेषस्तस्याः कुसुमं सुहिरण्यकाकुसुमं, बीयको वृक्षः प्रतीतः तस्य कुसुमं बीयककुसुमं, पीताशोकपीतकणवीरपीतबन्धु जीवाः प्रतीताः, 'भवेयारूवे' त्यादि प्राग्वत् । 'तत्थ णमि'त्यादि ।

'तत्र' तेषां मणीनां मध्ये ये शुक्ला मणयस्तेषामयमेतद्रूपो वर्णावासः प्रज्ञप्तः, तद्यथा 'से जहानामए' इत्यादि, सयथानाम 'अङ्को' रत्नविशेषः, शङ्खचन्द्र (दतकुन्द) कुमुदोदकोदकरजोदधिघ-नगोक्षीरपूरक्रौञ्चावलिहारावलिहंसावलिबलाकावलयः प्रतीताः, चन्द्रावली–तडागादिषु जलमध्यप्रतिबिम्बितचन्द्रपङ्क्ति, 'सारइयबलाहगे इति वा' शारदिकः–शरत्कालभावी बहालको–मेघः, 'धन्तधोयरुप्पपट्टे इ वेति' ध्मातः–अग्निसम्पर्केण निर्मलीकृतो धौतः–भूतिखरण्टित-हस्तसंतर्जनेन अतिनिशितीकृतो यो रूप्यपट्टो–रजतपत्रकं स ध्मातधौतरूप्यपट्टः, अन्ये तु व्याचक्षते–ध्मातेन –अग्निसंयोगेन यो धौतःशोधितो रूप्यपट्टः स ध्मातधौतरूप्यपट्टः, शालिपिष्ट-राशि–शालिक्षोदपुञ्जः, कुन्दपुष्पराशि कुमुदराशिश्च प्रतीतः, 'सुक्कछेवाडिया इ वे' ति छेवाडिनाम वल्लादिफलिका सा च कचिद्देशविशेषे शुष्का सती अतीव शुक्ला भवति ततस्तदुपादानं, 'पेहुणमिंजिया इ वेति' पेहुणं–मयूरपिच्छं तन्मध्यवर्तिनी पेहुणमिञ्जिका सा चातिशुक्लेति तदुपन्यासः, 'विसं' पद्मनीकन्दः, 'मृणालं' पद्मतन्तु गजदन्तलवङ्गदलपुण्डरीकदलश्वेता-शोकश्वे-

कणवीरश्वेतबन्धुजीवाः प्रतीताः, 'भवेयारूवे सिया' इत्यादि प्राग्वत्।

तदेवमुक्तं वर्णस्वरूपं, सम्प्रति गन्धस्वरूपं प्रतिपादनार्थमाह–

**मू. (१५-वर्तते)** *तेसि णं मणीणं इमेयारूवे गंधे पन्नत्ते, से जहानामए कोट्ठपुडाण वा तगरपुडाण वा एलापुडाण वा चोयपुडाण वा चंपापुडाण वा दमणा पुडाण वा कुंकुमपुडाण वा चंदनपुडाण वा उसीरपुडाण वा मरुआपुडाण वा जातिपुडाण वा जूहियापुडाण वा मल्लियापुडाण वा ण्हाणम- ल्लियापुडाण वा केतगिपुडाण वा पाडलिपुडाण वा नोमालियापुडाण वा –*

*–अगुरुपुडाण वा लवंगपुडाण वा कप्पूरपुडाण था वासपुडाण वा अणुवायंसि वा ओभिज्ज- माणाण वा कोट्टिज्जमाणाण वा मंजिज्जमाणाण वा उक्करिज्जमाणाण वा विकरिज्जमाणाण वा परिभुज्जमाणाण वा पिमाइज्जमाणाण वा भंडाओ वा भंडं साहरिज्जमाणाण वा ओराला मणुण्णा मनहरा धाणमणनिव्वुतिकरा सव्वतो समंता गंदा अभिनिस्सवंति।*

*भवेयारूवे, सिया ?, नो इणट्ठे समट्ठे, ते णं मणी एत्तो इट्ठतराए चेव गंधेणं पन्नता।*

**वृ.** 'तेसि णमि'त्यादि, तेषां मणीनामयुमेतद्रूपो गन्धः प्रज्ञप्तः, तद्यथा – 'से जहानामए' इत्यादि, प्राकृतत्वात् 'से' इति बहुवचनार्थ प्रतिपत्तव्यः, ते यथा नाम गन्धा अभिनिर्गच्छन्तीति सम्बन्धः, कोष्ठं–गन्धद्रव्यं तस्य पुटाः कोष्ठपुटास्तेषां, वाशब्दाः सर्वत्रापि समुच्चये, इह एकस्य पुटस्य प्रायो न तादृशो गन्ध आयाति, द्रव्यस्याल्पत्वात्, ततो बहुवचनं, तगरमपि गन्धद्रव्यं, एलाः प्रतीताः, चोयं–गन्धद्रव्यं चम्पकदमनककुङ्कुमचन्दनोशीरमरुकजातीयूथिकामल्लिकास्ना- नमल्लिकाकेतकीपाटलीनवमालिकाऽगुरुलवङ्गकुसुमवासकर्पूराणि प्रतीतानि, नवरमुशीरं– वीरणीमूलं स्नानमल्लिका–स्नानयोग्यो मल्लिकाविशेषः, एतेषां पुटानामनुवाते–आध्रायक- विवक्षितपुरुषाणानुकूले वाते वाति सति उद्भिद्यमानानामुद्घाट्यमानानां वाशब्दः सर्वत्रापि समुच्चये 'कुट्टिज्जमाणाण वा' इति इह पुटैः परिमितानि यानि कोष्ठादीनि गन्धद्रव्याणि तान्यपि परिमेये परिमाणोपचारात् कोष्ठपुटादीनीत्युच्यन्ते तेषां कुट्यमानानाम्–उदूखले क्षुद्यमानानां 'भंजिज्माणाण वा' इति श्लक्ष्णखण्डीक्रियमाणानां' एतच्च विशेषणद्वयं कोष्ठादिद्रव्याणामवसेयं, तेषामेव प्रायः कुट्टन श्लक्ष्णखण्डीकरणसम्भवात्, न तु यूथिकादीनां।

'उक्किरिज्जमाणाण वा' इति क्षुरिकादिभि कोष्ठादिपुटानां कोष्ठादिद्रव्याणां वा उत्कीर्यमाणानां 'विक्करिज्जमाणाण वा' इ विकीर्यमाणानामितस्ततो विप्रकीर्यमाणानां 'परिभुज्जमाणाण वा' परिभोगाय उपयुज्यमानानां, कचित् 'परिभाइज्जमाणाण वा' इति विकीर्यमाणानामितस्ततो विप्रकीर्यमाणानां 'परिभुज्जमाणाण वा' परिभोगाय उपयुज्यमानानां, क्वचित् 'परिभाइज्जमाणाण वा' इति पाठस्तत्र परिभाइज्जमाणानं संह्रियमाणानां उदाराः–स्फारास्ते चामनोज्ञा अपि स्युरत आह–मनोज्ञा–मनोऽनुकूलाः तच्च मनोज्ञत्वं कुत इत्याह–मनोहराः–मनो हरन्ति–आत्मवशं नयन्तीति मनोहराः, इतस्तत विप्रकीर्यमाणेन मनोहरत्वं, कुतः ? इत्याह।

घ्राणमनोनिर्वृतिकराः, एवंभूताः सर्वतः–सर्वासु दिक्षु समन्ततः– सामस्त्येन गन्धा अभिनि- स्सरन्ति, जिघ्रतामभिमुखं निस्सरन्ति, क्वचित् 'अभनिस्सवन्तीति' पाठः, तत्रापि स एवार्थो नरमभितः स्रवन्तीति शब्दसंस्कार, एवमुक्ते शिष्यः पृच्छति–'भवेयारूवे सिया' स्यादेतत् यथा भवेद् एतद्रूपस्तेषां मणीनां गन्धः ?, सूरिराह–'नो इणट्ठे समट्ठे' इत्यादि प्राग्वत्।

**मू. (१५-वर्तते)** *तेसि णं मणीणं इमेयारूवे फासे पन्नत्ते, से जहानामए आइणेति वा रूए ति वा बूरे इ वा नवनी एइ वा हंसगब्भतूलिया इ वा सिरीसकुसुमनिचये इ वा बालकुसुमपत्तरासी ति वा, भवेयारूवे सिया ?, नो इणट्ठे समट्ठे, ते णं मणी एत्तो इट्ठतराए चेव जाव फासेणं पन्नत्ता*

**वृ.** 'तेसि णमि'त्यादि, तेषां 'णमि'ति प्राग्वन्मणीनामयमेतद्रूपः स्पर्श प्रज्ञप्तः, तद्यथा—'से जहानामए' इत्यादि, तद्यथा अजिनकं–चर्ममयं वस्त्रं रुतं–प्रतीतं बूरो–वनस्पतिविशेषः नवनीतं–म्रक्षमं हंसगर्भतूलीशिरीषकुसुमनिचयाश्च प्रतीताः, 'बालकुमुदपत्तरासी इव' इति बालानि–अचिरकालजातानि यानि कुमुदपत्राणि तेषां राशिर्बालकुमुदपत्रराशि, कचिद् 'बालकुसुमपत्रराशि' इति पाठः, 'भवे एयारूवे' इत्यादि प्राग्वत् ।

**मू. (१५-वर्तते)** *तए णं से आभियोगिए देवे तस्स दिव्वस्स जाणविमानस्स बहुमज्झदेसभागे एत्थ णं महं पिच्छाघरमंडवं विउव्वइ अनेगखंभसयसंनिविट्ठं अब्भुग्गयसुकयवरवइयातोरण-खवियउज्जलबहुसमसुविभततदेसभाइए । ईहामियउसभतुरगनरमगरविहगवालगकिंनररुरुस-रभचमरकुंजरवणलयपउमलयभत्तिचित्तं कंचणमणिरयणथूभियागं नानाविहपंचवण्णघंटा-पडागपरिमंडियग्गसिहरं ववलं मरीतिकवयं विणिम्मुयंतं काउल्लोइयमहियं गोसीस रत्तचंदणदद्दरदिन्न-पंचंगुलितलं चउवियचंदनकलसं चंदनघडसुकयतोरणपडिदुवारदेसभागं ।*

*आसत्तोसत्तविउलवट्टवग्घारियमल्लदामकलावं पंचवण्णसरससुरभि मुक्कपुप्फपुंजोव-यारकलियं कालागुरुपवरकुंदरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूतं दिव्वं तुडियसद्दसंपणाइयं अच्छरगणसंघविकिण्णं पासाइयं दरिसणिज्जं जाव पडिरूवं । तस्स णं पिच्छाघरमंडवस्स बहुसमरमणिज्जभूमिभागं विउव्वति जाव मणीणं फासो ।*

*तस्स णं पेच्छाघरमंडवस्स उल्लोयं विउव्वति पउमलयभत्तिचित्तं जाव पडिरूवं । तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभाए एत्थ णं महं एगं वइरामयं अक्खाडगं विउव्वति*

*तस्स णं अकखाडयस्स बहुमज्झदेसभागे एत्थ णं महेगं मणिपेढियं विउव्वति अट्ठजोयणाइं आयामविक्खंभेणं चत्तारि जोयणाइं बाहल्लेणं सव्वं मणिमयं अच्छं सण्हं जाव पडिरूवं ।*

*तीसे णं नणिपेढियाए उवरि एय णं महेगं सिंहासनं विउव्वइ, तस्स णं सीहासनस्स इमेयारूवे वण्णावासे पन्नत्ते—तवणिज्जमया चक्कला रययामया सीहा सोवण्णिया पाया नाना- मणिमयाइं पायसीसगाइं जंबूणयमयाइं गत्ताइं वइरामया संधी नानामणिमये वेच्चे ।*

*से णं सीहासने इहामियउसभदुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवण-लयपउमलभत्तिचित्तं (सं) सारसारोवचियमणिरयणपायपीढे अच्छरगमिउम- सूरगणवतयकुसंत-लिम्बकेसरपच्चत्थुयाभिरामे सुविरइयरयत्ताणे उवचियखोमदुगुल्लपट्टपडिच्छायणे रत्तंसुअसंवुए सुरम्मे आइणगरूय बूयनवनीयतूलफासे मउए पासाइए ४ ।*

**वृ.** 'तए णमि'त्यादि, ततः स आभियोगिको देवस्तस्य दिव्यस्य यानविमानस्य बहुमध्य-देशभागे अत्र महत्प्रेक्षागृहण्डपं विकुर्वति, कथम्भूतमित्याह—अनेकस्तम्भशतसन्निविष्टं तथा अभ्युद्गता–अत्युत्कटा सुकृता–सुष्ठु निष्पादिता वरवेदिकानि तोरणानि वरर चिताः शालभञ्जिका-श्च यत्र तदभ्युद्गतसुकृतवरवेदिकातोरणवररचितशालभञ्जिकाकं, तथा सुश्लिष्टा विशिष्टा लष्टसंस्थिताः–मनोज्ञसंस्थानाः प्रशस्ताः–प्रशस्तवास्तुलक्षणोपेता वैडूर्यविमलस्तम्भा–

वैडूर्यरत्नमया विमलाः स्तम्भा यत्र तत् सुश्लिष्टविशिष्टसंस्थितप्रशस्तवैडूर्यविमलस्तम्भ, तथा नाना मणयः खचिता यत्र भूमिभागे स नानामणिखचितः सुखादिदर्शनात् क्तान्तस्य पाक्षिकः परनिपातः नाणामणिखचित उज्वलो बहुसमः-अत्यन्तसमः सुविभक्त भूमिभागो यत्र तत् नानामणिखचितोऽवलबहुसमसुविभक्तभूमिभागं, तथा इहामृगा-वृकाः ऋषुभतुरगनरमगरविहगाः प्रतीताः व्यालाः-स्वापदभुजगाः किंनरा-व्यन्तरविशेषाः रुरवो-मृगाः सरभाः आटव्या महाकायाः पशवः चमरा-आटव्यागावः कुञ्जरा-दन्तिनः वनलता-अशोकादिलताः पद्मलताः-पद्मिन्यः

एतासां भक्त्या-विच्छित्या चित्रम्-आलेखो यत्र तदिहामृगऋषभतुरगनरमकरविहगव्यालकिन्नररुरुसरभचमरकुञ्जरवनलतापद्मलताभक्तिचित्रं, तथा स्तम्भोद्गतया-स्तम्भोपरिवर्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सद् यदभिरामं तत् स्तम्भोद्गतवज्रवेदिकापरिगताभिरामं, तथा स्तम्भो द्गतया-स्तम्भोपरिवर्तिन्या वज्ररत्नमय्या वेदिकया परिगतं सद् यदभिरामं तत् स्तम्भोद्गतवज्रवेदिकापरिगताभिरामं, 'विज्जाहरजमलजुगलजन्तजुत्तं पिव अच्चीसहस्समालिणीय'मिति विद्या धरन्तीति विद्याधरा-विशिष्टविद्याशक्तिमन्तः तेषां यमलयुगलानि-समानशीलानि द्वन्द्वानि तेषां यन्त्राणि-प्रपञ्चविशेषास्तैर्युक्तमिव अर्चिषां-मणिरत्नप्रभाज्वालानां सहस्रर्मालनीयं-परिवारणीयं, किमुक्तं भवति।

एवं नाम अत्यद्भुतैर्मणिरत्नप्रभाजालैराकलितमिव भाति यथा नूनमिदं न स्वाभाविकं, किन्तु विशिष्टविद्याशक्तिमुत्पुरुषप्रपञ्चप्रभावितामिति, 'रूवगसहस्सकलितं भिसिमाणं भिब्भिसमाणं चकखुल्लोयणलेसं सुहफासं सस्सिरीयरूव'मिति प्राग्वत्, कचिदेतत्र दृश्यते, 'कञ्चणमणिरयणथूभियाग'मिति काञ्चनंच मणयश्च रत्नानि च काञ्चनमणिरत्नानि तेषां-तन्मयी स्तूपिका-शिखरं यस्य तत्तथा नानाविधाभि-नानाप्रकाराभि पञ्चवर्णाभिर्घण्टाभि पताकाभिश्च परि-सामस्त्येन मण्डितमग्रं-शिखरं यस्य तन्नानाविधपञ्चवर्ण्णघण्टापताकापरिमाण्डिताग्रशिखरं, चपलं-चञ्चलं चिकचिकीयमानत्वात् मरीचिकवचं-किरणजालपरिक्षेपं विनिर्मुञ्चत् 'लाउल्लोइयमहिय'मिति लाइयं नाम-यद्भूमेर्गोमयादिनोपलेपनं उल्लोइयं-कुड्यानां मालस्य च सेटिकादिभि स्मृष्टीकरणं लाउल्लोइयाभ्यामिव महितं-पूजितं लाउल्लोइयमहियं।

तथा गोशीर्षेण-गोशीर्षनामकचन्दनेन ददरेण-बहलेन चपेटाकारेण वा दत्ताः पञ्चाङ्गुलयस्तला-हस्तका यत्र तद्गोशीर्षरक्तचन्दनदर्दरदत्तपञ्चाङ्गुलितलं, तथा उपचिता-निवेशिताः चन्दनकलशा-मङ्गलकलशा यत्र तदुपचितचन्दनकलशं, 'चंदनघडसुकयतोरणपडिदुवारदेसभागमिति' चन्दनघटैः- चन्दनकलशैः सुकृतानि सुष्ठु कृतानि शोभितानीति तात्पर्यार्थं, यानि तोरणानि तानि चन्दनघटसुकृतानि तानि तोरणानि प्रति द्वारकेशभागं-द्वारदेशभागे यत्र तत् चन्दघटसुकृततोरणप्रतिद्वारदेशभागं, तथा 'आसत्तोत्ससत्तविपुलवट्टवग्घारियमल्लदामकलाव'मिति आ-अवाङ् अधोभूमौ लग्न इत्यर्थः, उत्सक्तं-ऊर्ध्वसक्तं उल्लोतले उपरि सम्बद्ध इत्यर्थः विपुलो-विस्तीर्ण वृत्तो-वर्त्तुलः वग्धाग्यि इति-प्रलम्बितो माल्यदामकलापः- पुष्पमालासमूहो यत्र तदासक्तोत्सक्तविपुलवृत्तप्रलम्बितमाल्यदामकलापं।

तथा पञ्चवर्ण्णेन सरसेन -सच्छायेन सुरभिणा मुक्तेन-क्षिप्तेन पुष्पपुञ्जलक्षणेनोपचारेण-पूजया कलितं पञ्चवर्ण्णसरससरभिमुक्तपुष्पपुञ्जोपचारकलितं, 'कालागुरुपवरकुन्दुरुक्कतुरुक्कधूव-

मधमघंतगन्धुद्धुयाभिरामं सुगंधवरगंधियं गंधवट्टिभूय' मिति प्राग्वत्, तथा अप्सरोगाणानां सङ्घः–समुदायस्तेन सम्यग्–रमणीयतया विकीर्ण्ण–व्याप्तमप्सरोगणसङ्घविकीर्ण्ण, तथा दिव्यानां त्रुटितानाम आतोद्यानां–वेणुवीणामृदङ्गादीनां ये शब्दास्तैः सम्प्रणादितं– सम्यक्–श्रोत्रमनोहारितया प्रकर्षेण नादितं–शब्दवद् दिव्यत्रुटितशब्दसम्प्रणादितं, 'अच्छं जाव पडिरूवं'मिति यावच्छब्दकरणात् 'अच्छं सण्हं मट्ठं नीरयं निम्मलं निप्पंकं निक्कंकडच्छायं सप्पभं समिरियं सउज्जोयं पासाइयं दरिसणिज्जं अभिरूवं पडिरूव' मिति द्रष्टव्यं, एतच्च प्राग्वद्याख्येयं।

'तस्स णमि'त्यादि, तस्य 'णमि'ति प्राग्वत् प्रेक्षागृहमण्डपस्यान्तः–मध्ये बहुसमरणीयं भूमिभागं विकुर्वन्ति, तद्यथा–आलिंगपुष्करमिति वे त्यादि, तदेव तावद्वक्तव्यं यावन्मणिस्पर्शसूत्र-पर्यन्तः, तथा चाह– 'जावमणीणं फासो' इति। 'तस्स णमि'त्यादि, तस्य णमिति पूर्ववत् प्रेक्षागृह-मण्डपस्य उल्लोकम्–उपरिभागं विकुर्वन्ति पद्मलताभक्तिचित्रं 'जाव पडिरूवमि' ति, यावच्छब्दकरणात् 'अच्छं सण्हं' मित्यादिविशेषणकदम्बकपरिग्रहः।

'तस्स णमि' त्यादि, तस्य–बहुसमरमणीयस्य भूमिभागस्य बहुमध्यदेशभागे अत्र 'ण'मिति पूर्ववत् एकं महान्तं वज्रमयमक्षपाटं विकुर्वन्ति, तस्य चाक्षपाटकस्य बहुमध्यदेशभागे तत्रैकां महतीं मणिपीठिकां विकुर्वन्ति, अष्टौ योजनान्यायामविष्कम्भाभ्यां चत्वारि योजनानि बाहुल्येन–उच्चैस्त्वेनेति भावः, कथंभूतां तां विकुर्वन्तीत्यत आह 'सर्वमणिमयीं' सर्वात्मना मणिमयीं यावत्करणादच्छाभिधादिविशेषसमुहपरिग्रहः, तस्याश्च मणिपीठिकाया उपर्यत्र महदेकं सिंहासनं विकुर्वन्ति, तस्य च सिंहासनस्यायमेतद्रूपो वर्णावासः प्रज्ञप्तः, तद्यथाःतपनीयमयाः चक्कला रजतमयाः सिंहास्तैरुपशोभितं सिंहासनमुच्यते, सौवर्णिकाः–सुवर्णमयाः पादाः नानामणिमयानि पादशीर्षकाणि–पादानामुपरितना अवयवविशेषाः, जम्बूनदमयानि गात्राणि वज्रमया–वज्ररत्नापूरिताः सन्धयो–गात्राणां सन्धिमेलाः नानामणिमयं वेच्चं–तज्जातः।

'सेणं सीहासण इत्यादि' तत् सिंहासनमीहामृगऋषभतुरगनरमकरव्यालककिन्नररुरुसर-भचरमरवनलतापद्मलताभक्ति चित्रं '(सं) सारसारोवचियमणिरयणपायपीठ'मिति (सं) सारसारैः–प्रधानैः–प्रधानैः मणिरत्नैरुपचितेन पादपीठेन सह यत्तत्तथा, प्राकृतत्वाच्च पदोपन्यास-व्यत्ययः 'अच्छरयमउमसूरगनवतयकुसन्तलिम्बकेसरपच्चत्थुयारिभिरामे इति' अस्तरकम्–आच्छादकं मृदु यस्य मसूरकस्य तदस्तरकमृदु, विशेषणस्य परनिपातः प्राकृतत्वात्, नवा त्वच् येषां ते नवत्वचः कुशान्ताः दर्भपर्यन्ता नवत्वचश्च ते कुशान्ताश्च नवत्वक्कशान्ताः– प्रत्यग्रत्वग-दर्भपर्यन्तरूपाणि लिम्बानि–कोमलानि नमनशीलानि च केसराणि मध्ये यस्य मसूरकस्य तत् नवत्वक्कशान्तलिम्बकेशरम् आस्तरकमृदुना मसूरकेण नवत्वक्कशान्तलिम्बकेसरेण प्रत्यवस्तृतम्–आच्छादितं सत् यदभिरामं तत्तथा, शान्तलिम्बकेशरम् आस्तरकमृदुना मसूरकेण नवत्वक्कशान्त-लिम्बकेसरेण प्रत्यवस्तृतम्–आच्छादितं सत् यदभिरामं तत्तथा–,

विशेषणपूर्वापरनिपातो याद्दच्छिकः प्राकृतत्वात्, 'आईणगरुअबूरनवणीयतूलफासे' इति पूर्ववत्, तथा 'सुविरइयरयत्ताणे' तथा सुष्ठु विरचितं सुविरचितं रजस्त्राणमुपरि यस्य तत्सुविरचि-तरजस्त्राणं, 'उवचियखोमियदुगुल्लपट्टपडिच्छयण'मिति, उपचितं–परिकर्मितं यत्क्षौमं दुकूलं–कार्पासिकं वस्त्रं परिच्छादनं रजस्त्राणस्योपरि द्वितीयमच्छादनं यस्य तत्तथा, तत उपरि 'रत्तंसुयसंवुडे'

इति रक्तांशु केन–अतिरमणीयेन रक्तेन वस्त्रेण संवृतम्–आच्छादितमत एव सुरम्यं, 'पासाइए दरिसणिज्जे अभिरूवे पडिरूवे' इति प्राग्वत् ।।

मू. (१५–वत्तति) *तस्स ण सिंहासनस्स उवरि एत्थ णं महेगं विउव्वंति, संखंक (संख) कुंददगरयअमयमहियफेणपुंजसंनिगासं सव्वरयणामयं अच्छं सण्हं पासादीयं दरिसणिज्जं अभिरूवं पडिरूवं तस्स णं सीहासनस्स उवरिं विजयदूसस्स य बहुमज्झदेसभागे एत्थ णं (महं एगं) वयरामयं अंकुसं विउव्वंति, तस्सिं च णं वयरामयंसि अंकुसंसि कुंभिक्के मुत्तादामं विउव्वंति।*

*से णं कुंभिक्के मुत्तादामे अन्नेहिं चउहिं अद्धकुंभिक्केहिं मुत्तादामेहिं तदद्धुच्चत्तपमाणेहिं सव्वओ समंता संपरिखित्ते । ते णं दामा तवणिज्जलंबूसगा सुवण्णपयरगमंडियग्गा णाणनमणिरयणविविहहारद्धहारउवसोभियसमुदाया ईसिं अन्नमन्नसंपत्ता वाएहिं पुव्वावरदाहिणुत्तरागएहिं मंदाय मंदाय एइज्जमाणाणि २ पलंबमाणाणि २ पझंजं (पज्झंझ) माणाणि २ उरालेण मणुन्नेणं मणहरेणं कण्णमणणिव्वुतिकरेणं सद्देणं ते पएसे सव्वओ समंता आपूरेमाणा सिरीए अतीव २ उवसोभेमाणा चिट्ठंति ।*

*तए णं से आभिओगिए देवे तस्स सिंहासनस्स अवरुत्तरेणं उत्तरेणं उत्तरपुरच्छिमेणं एत्त णं सूरिआभस्स देवस्स चउण्हं सामानियसाहस्सीणं चत्तारि महासणसाहस्सीओ विउव्वइ, तस्स णं सीहासनस्स पुरच्छिमेणं एत्थ णं सूरियाभस्स देवस्स चउण्हं अग्गमहिसीणं सपरिवाराणं चत्तारि भद्दासणसाहस्सीओ विउव्वइ ।*

*तस्स णं सीहासनस्स दाहिणपुरच्छिमेणं एत्थ णं सूरियाभस्स देवस्स अब्भिंरपरिसाए अट्ठण्हं देसाहस्सीणं अट्ठ भद्दासणसाहस्सीओ विउव्वइ, एवं दाहिणेणं मज्झिमपरिसाए दसण्हं देवसाहस्सीणं दस भद्दासणसाहस्सीओ विउव्वति दाहिणपच्चत्थिमेणं बाहिरपरिसाए बारसण्हं देवसाहस्सीणं बारस भद्दासणसाहस्सीओ विउव्वति पच्चत्थिमेणं सत्तण्हं अनियाहिवतीणं सत्त भद्दासणे विउव्वति । तस्स णं सीहासनस्स चउदिसिंएत्थ णं सूरियाभस्स देवस्स सोलसण्हं आयरक्खदेवसाह- स्सीणं सोलस भद्दासणसाहस्सीओ विउव्वति, तंजहा पुरच्छिमेणं चत्तारि साहस्सीओ दाहिणेणं चत्तारि साहस्सीओ पच्चत्थिमे णं चत्तारि साह० उत्तरेणं चत्तारि साह० ।*

*तस्स दिव्वस्स जाणविमाणस्स इमेयारूवे वण्णावासे पन्नत्ते, से जहानामए अइरुग्गयस्स वा हेमंतियबालियसूरियस्स वा खयरिंगाण वा रत्तिं पज्जलियाण वा जावाकुसुमवणस्स वा किंसुयवणस्स वा पारियायवणस्स वा सव्वतो समंता संकुसुमियस्स, भवेयारूवे सिया ?, नो इणट्ठे समट्ठे, तस्स णं दिव्वस्स जाणविमाणस्स एत्तो इट्ठतराए चेव जाव वण्णेणं पन्नत्ते, गंधो य फासो य जहा मणीणं ।*

*तए णं आभिओगिए देवे दिव्वं जाणविमानं विउव्वइ २ त्ता जेणेव सुरियाभे देवे तेणेव उवागच्छइ २ त्ता सूरियाभं देवं करयलपरिग्गहियं पच्चप्पिणंति ।।*

वृ. 'तस्स णमि'त्यादि, तस्य सिंहासनस्योपर्युल्लोके 'अत्र' अस्मिन् स्थाने महदेकं विजयदूष्यं–वस्त्रविशेषः, आह च जीवाभिगममूलटीकाकृत्–'विजयदूष्यं' वस्त्रविशेष' इति, तं विकुर्वन्ति–स्वशक्त्या निष्पादयन्ति, कथम्भूतमित्याह–'शङ्खकुन्ददकरजोऽमृतमथितकेन- पुञ्जसन्निकाशं' शङ्खः प्रतीतः, कुन्देति–कुन्दकुसुमं दकरजः–उदककणाः अमृतस्य–क्षीरोदधिज-

तस्य मथितस्य यः फेनपुञ्जो–डण्डीरोत्करः तत्सन्निकाशं–तत्समप्रभं, पुनः कथम्भूतमित्याह–'सव्वरयणामयं' सर्मना रत्नमयं 'अच्छं सण्हं पासाइयमि'त्यादिविशेषणजालं प्राग्वत् ।

'तस्स णमि'त्यादि, तस्य सिंहासनस्योपरि तस्य विजयदूष्यस्य बहुमध्यदेशभागेऽत्र महान्तमेकं वज्रमयं–वज्ररत्नमयमङ्कुशम्–अङ्कुशाकारं मुक्तादामावलम्बनांश्रयं विकुर्व्वन्ति, तस्मिंश्च वज्रमयेऽङ्कुशे महदेकं कुम्भाग्रं–मगधदेशप्रसिद्धं कुम्भपरिमाणं मुक्तादाम विकुर्व्वन्ति

'से णमि'त्यादि, तत्कुम्भाग्रं मुक्तादाम अन्यैश्चतुर्भिः कुम्भाग्रैः–कुम्भपरिमाणैर्मुक्तादामभिस्तदर्धोच्चत्वप्रमाणमात्रैः 'सर्वतः' सर्वासु दिक्षु समन्ततः–सामस्त्येन सम्परिक्षिप्तं–व्याप्तं । 'ते णं दामा' इत्यादि, तानि पञ्चापि दामानि ''तवणिज्जलंबूसगा तपनीयमया लम्बूसगा–आभरणविशेषरूपा (पाः सुवर्णप्रतरकाः सुवर्णपत्राणि तैः मण्डितं- शोभितं अग्रं–अग्रभागो येषां तानि तथा अ) ग्रभागे येषां प्लम्बमानानां तानि तथा, 'नानामणिरत्नैः' नानामणिरत्नमयैर्विविधैः–विचित्रैर्हारैरर्द्धहारैश्चोपशोभितःसामस्त्येनोपशोभितः समुदायो येषां तानि तथा ।

तथा ईषत्–मानाक् अन्योऽन्यं–परस्परं असंप्राप्तानि–असंलग्नानि पूर्वापरदक्षिणोत्तरागतैः (वातैः) मन्दाय मन्दाय इति–मनंद मन्दं 'एज्जमानानि' कम्पमानानि 'भृशार्भीण्याविच्छेदे द्विः प्राक्तमवादे' रित्यविच्छेदे द्विर्वचनं यथा पथन्ति पचन्तीत्यत्र, एवमुत्तरत्रापि, ईषत्कम्पनवशादेव प्रकर्षत इतस्ततो मनाक् चलनेन लम्बमानानि २ ततः परस्परं सम्पर्कवशतः 'पेञ्झंजमाणा पेञ्झंजमाणा' इति शब्दायमानानि २ उदारेण स्फारेण शब्देनेति योगः, स च स्फारशब्दो मनःप्रतिकूलोऽपि भवति तत आह–'मनोज्ञेन' मनोऽनुकूलेन, तच्च मनोऽनुकूलत्वं लेशतो स्यादत आह–'मनोहरेण' मनांसि श्रोतृणां हरति–एकान्तेनात्मवशं नयतीति मनोहरो 'लिहादेराकृतिगणत्वादच् प्रत्ययः', तेन, तदपि मनोहरत्वं कुत इत्याह–

'कर्ण्णमनोनिर्वृतिकरेम' 'निमित्तकारणहेतुषु सर्वासां विभक्तीनां प्रायो दर्शन'मिति वचनात् हेतौ तृतीया, ततोऽयमर्थः–प्रतिश्रोतृ कर्णयोर्मनसश्च निर्वृतिकरः–सुखोत्पादकस्ततो मनोहरस्तेनेत्थम्भूतेन शब्देन तान् प्रत्यसन्नान् प्रदेशान् सर्वतो–दिक्षु समन्ततो–विदिक्षु आपूरयन्ति २, शत्रन्तस्य स्यादाविदं रूपं, अत एव श्रिया–शोभया अतीवोपशोभमानानि २ तिष्ठन्ति । 'तए णमि'त्यादि, ततः स आभियोगिको देवस्तस्य सिंहासनस्यापरोत्तरेण, वायव्ये कोणे इत्यर्थ,ः उत्तरेण–उत्तरस्यां 'उत्तरपुरच्छिमेण' ईशान्यां 'अत्र' एतासु तिसृषु दिक्षु सूर्याभस्य देवस्य चतुर्ण्णां सामानिकसहस्राणां योग्यानि चत्वारि भद्रासनसहस्राणि विकुर्व्वति, पूर्वस्यां चतसृणामग्रमहिषीणां सपरिवाराणां चत्वारि भद्रासनसहस्राणि दक्षिणपूर्वस्यामभ्यन्तरपर्षदोऽष्टानां देवसहस्राणां योग्यानि अष्टौ भद्रासनसहस्राणि दक्षिणस्यां मध्यमपर्षदो दशानां देवसहस्रणां योग्यानि दश भद्रासनसहस्रणि, दक्षिणापरस्यां नैऋतकोण इत्यर्थः बाह्यपर्षदो द्वादशानां देवसहस्रणां द्वादश भद्रासनसहस्राणि पश्चिमायां सप्तानामनीकाधिपतीनां सप्त भद्रासनानि विकुर्वति ।

तदनन्तरं तस्य सिंहासनस्य चतसृषु दिक्षु अत्र सामानिकादिदेवभद्रासनानां पृष्ठतः सूर्याभस्य देवस्य सम्बन्धिनां षोडशानामात्मरक्षकदेवसहस्राणां योग्यानि षोडश भद्रासनसहस्राणि विकुर्व्वति, तद्यथा–चत्वारि भद्रासनसहस्राणि पूर्वस्यां चत्वारि दक्षिणतश्चत्वारि पश्चिमायां चत्वारि उत्तरतः सर्वसङ्ख्यया सप्ताधिकानि चतुःपञ्चाशत्सहस्राणि ५४००७ भद्रासनानां विकुर्वति ।

'तस्स णं दिव्वस्से'त्यादि, तस्य 'णमि'ति पूर्ववत् दिव्यस्य यानविमानस्यायम्–अनन्तरं वक्ष्यमाणस्वरूपो वर्णावासो--वर्णकनिवेशः प्रज्ञप्तः, तद्यथा–'से जहानामए' इत्यादि, स यथानाम अचिरोद्गतस्य–क्षणमात्रमुद्गतस्य 'हैमन्तिकस्य' शिशिरकालभाविनो बालसूर्यस्य स ह्यत्यन्त-मारक्तो भवति दीप्यमानश्चेत्युपादानं, वाशब्दाः सर्वेऽपि समुच्चये, खादिराङ्गाराणि वा 'रत्ति'मिति सप्तम्यर्थे वितया प्राकृतत्वात् यथा- 'उय विणयभत्तिल्ले पूरेमसिसिरे दहे गए सूरे कत्तो रत्तिं सुद्धे नियसद्धा सउणयाणमि' त्यत्र।

ततोऽयमर्थः–रात्रौ प्रज्वलितानां जपाकुसुमवनस्य वा किंशुकवनस्य वा पारिजातवनस्य वा सर्वतः–सर्वासु दिक्षु समन्ततः–सामस्त्येन 'सङ्कुसुमितस्य' सम्यक् कुसुमितस्य, अत्रान्तरे शिष्यः पृच्छति–भवेदेतद्रूप एतेषां वर्णः 'भवेयारूवे सिया' इति स्यात्- कथञ्चिद् भवेदेतद्रूपस्तस्य दिव्यस्य यानविमानस्य वर्ण ? । सूरिराह–'नो इणट्ठे समट्ठे, तस्स णं दिव्वस्स जाणविमानस्स एत्तो इट्ठतराए चेव कंततरागे चेव मणुन्नतरागे चेव मणामतरागे चेव वण्णे पन्नत्ते' इति प्राग्वत् व्याख्येयम्।

'गंधो फासो जहा मणीण'मिति गन्धः स्पर्श यथा प्राग् मणीनामुक्तास्तथा वक्तव्यः, स चैवं–'तस्स णं दिव्वस्स जाणविमाणस्स इमे एयारूवे गंधे पन्नत्ते, तंजहा–से जहानामए कोट्ठपुडाण वा एगरपुडाण वा' इत्यादि।

'तए णं से आभिओगिए देवे' इत्यादि, यावत्करणात् 'करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अंजिलिं कट्टु जएणं विजएणं वद्धावेइ वद्धावित्ता एयमाणत्तियमि'ति द्रष्टव्यम्॥

**मू. (१६)** *तए णं से सूरिओभे देवे आभिओगस्स देवस्स अंतिए एयमट्ठं सोच्चा निसम्म हट्ठ जाव हियए दिव्वं जिणिंदाभिगमणजोग्गं उत्तरवेउव्वियरूवं विउव्वति २ त्ता चउहिं अग्ग-महिसीहिं सपरिवाराहिं दोहिं अणीएहिं, तंजहा–गंधव्वणीएण य नट्टानीएण य सद्धिं संपरिवुडे तं दिव्वं जाणविमानं अणुयपयाहिणीकरेमाणे २ पुरच्छिमिल्लेणं तिसोमाणपडिरूवएणं दुरुहित्ता जेणेव सिंहासने तेणेव उवागच्छइ २ त्ता सीहासनवरगए पुरत्थाभिमुहे सन्निसन्ने।*

*तए णं तस्स सूरिआभस्स देवस्स चत्तारि सामानियसाहस्सीओ तं दिव्वं जाणविमानं अणुपयाहिणीकरेमाणा उत्तरिल्लेणं तिसोवाणपडिरूवएणं दुरूहंति दुरुहित्ता पत्तेयं २ पुव्वणत्थेहिं भद्दासणेहिं निसीयंति, अवसेसा देवा य देवीओ य तं दिव्वं जाणविमानजाव दाहिणिल्लेणं तिसोवाणपडिरूवएणं दुरूहंति २ त्ता पत्तेयं २ पुव्वंणत्थेहिं भद्दासणेहिं निसीयंति।*

*तए णं तस्स सूरियाभस्स देवस्स तं दिव्वं जाणविमाणं दुरूढस्स समाणस्स अट्ठट्ठमंगलगा पुरतो अहाणुपुव्वीए संपत्थिता, तंजहा–सत्थियसिरिवच्छ जाव दप्पणा।*

*तयानंतरं च णं पुन्नकलसभिंगार दिव्वा य छत्तपडाया सचामरा दंसणरतिया आलोय-दरिसणिज्जा वाउद्धुयविजयवेजयंतीपडागा ऊसिया गगनतलमणुलिहंती पुरतो अहानुपुव्वीए संपत्थिया। तयानंतरं च णं वेरुलियभिसंतविमलदंडं पलंबकोरंटमल्लदामोवसोभितं चंदमंडलनिभं समुस्सियं विमलमायवत्तं पवरसीहासणं च मणिरयणभत्तिचित्तं सपायपीढं सपाउयाजोयसमाउत्तं बहुकिंकरामरपरिग्गहियं पुरतो अहाणुपुव्वीए संपत्थियं।*

*तयानंतरं च णं वइरामयवट्टलट्ठसंठियसुसिलिट्ठपरिघट्ठमट्ठसुपतिट्ठिए विसिट्ठे*

*अनेगवरपंचवण्णकुडभीसहस्सुस्सिए (परिमंयाभिरामे) वाउद्धुयविजयवेजयंतीपडागच्छत्तातिच्छ-तकलिते तुंगे गगनतलमणुलिहंतसिहरे जोअणसहस्समूसिए महतिमहालए महिंदज्झए पुरतो अहाणुपुव्वीए संपत्थिए। तयानंतरं च णं सुरूवणेवत्थपरिकच्छिया सुसज्जा सव्वालंकारभूसिया महया भडचडगरपहकरेणं पंच अणीयाहिवईओ पुरओ अहाणुपुव्वीए संपत्थिया।*

*तयानंतरं च णं बहवे आभिओगिया देवा देवीओ य सएहिं २ रूवेहिं सएहिं २ विसेसेहिं सएहिं २ विंदेहिं सएहिं २ नेज्जाएहिं सएहिं २ नेवत्थेहिं पुरतो अहाणुपुव्वीए संपत्थिया) तयानंतरं च णं सूरियाभविमाणवासिणो बहवे वेमाणिया देवा य देवीओ य सव्विड्ढीए जाव रूवेणं सुरियाभं देवं पुरतो पासतो य मग्गतो य समनुगच्छंति ॥*

वृ. 'तए णं से सेरूयाभे देवे' इत्यादि, दिव्यं–प्रधानं जिनेन्द्रस्य–भगवतो वर्धमानस्वामिनोऽ-भिगमनाय–अभिमुखं गमनाय योग्यम्–उचितं जिनेन्द्राभिगमनयोग्यमुत्तरवैक्रियं रूपं विकुर्व्वति, विकुर्व्वित्वा चतसृभिरग्रमहिषीभि सपरिवाराभिर्द्वाभ्यामनीकाभ्यां, तद्यथा–गन्धर्वानीकेन नाट्यानीकेन च, सार्द्धं, तत्र सहभावः स्वस्वाभिभावमन्तरेणापि दृष्टो, यथा समानगुणविभय-योर्द्वयोर्मित्रयोः, अतः स्वस्वामिभावप्रकटनार्थमाह–'संपरिवुडे' सम्यगाराधकभावं बिभ्राणैः परिवृतः–सम्परिवृतः तत् दिव्यं यानावमानमनुप्रदक्षिणी कुर्वन्–पूर्वतोरणानुकूल्येन प्रदक्षिणीकुर्वन् पूर्वेण तोरणेनानुप्रविशति–स्विहासनानुकूलं प्रविशति, प्रविशन् पूर्वेण 'त्रिसोपानप्रतिरूपकेण' प्रतिविशिष्टरूपेण त्रिसोपानेन तद् यानविमानं 'दुरुहइ'त्ति आरोहति, आरुह्य च 'जेणेव'ति यस्मिन्नेव देशे तस्य मणिपीठिकाया उपरि सिंहासनं तत्रोपागच्छति, उपागत्य च सिंहासनवरगतः सन् पूर्वाभिमुखः 'सन्निषण्णः' सम्यक्–सकलसेवकजनचमत्कारकारिण्या उपवेशनस्थित्योपविष्टः

'तए णमि'त्यादि, ततस्तस्य सूर्याभस्य देवस्य चत्वारि सामानिकदेवसहस्राणि तद् दिव्य यानविमानमनुप्रदक्षिणीकुर्वन्ति, उत्तरेण त्रिसोपानप्रतिरूपकेणारोहन्ति, 'पुव्वनचत्थेहिं' इत्यादि, अत्र सप्तम्यर्थे तृतीया, पूर्वन्यस्तेषु भद्रासनेषु निषीदन्ति, अवशेषाः–अभ्यन्तरपर्षदादयो देवा देव्यश्च दक्षिणेन त्रिसोपानप्रतिरूपकेणारोहन्ति, आरुह्य च स्वेषु भद्रासनेषु निषीदन्ति।

'तए णमि'त्यादि, ततस्तस्य सूर्याभस्य देवस्य तद् दिव्यं यानविमानमारूढस्य पुरतोऽष्टाष्ट-मङ्गलकानि यथानुपूर्व्या–वक्ष्यमाणपाठक्रमेणेत्यर्थः, सम्प्रस्थितानि, तद्यथा–'सोत्थियसिरिवच्छे'-त्यादि, पूर्वं स्वस्तिकः तदनन्तरं श्रीवत्सस्तदनन्तरं पूर्णकलशभृङ्गारदिव्यातपत्रपताकाः सचामराः, कथम्भूताः ? इत्याह–'दर्शनरतिका' दर्शने–अवलोकने रतिर्यासु ता दर्शनरतिकाः, इह दर्शनर-तिकमपि किञ्चिदालोकदर्शनीयं न भवत्यमङ्गलत्वात् यथा गर्भवती युवतिः, अत आह–आलोके–बहि प्रस्थानसमयभाविनि दर्शनीया–द्रष्टुं योग्या मङ्गल्यत्वात्, अन्ये त्वाहुः– आलोके दर्शनीया न पुनरत्युच्चा आलोकदर्शनीया, तथा वातोद्धुता विजयसुचिका वैजयन्तीति विजयवैजयन्ती च उत्सृता–ऊर्ध्वीकृता गगनतलम्–अम्बरतलमनुलिखन्ती–ऽभिलङ्घयन्ती 'पुरतो' यथानुपूर्व्या सम्प्रस्थिता।

'तयानंतरं च णमि'त्यादि, तदनन्तरं 'वेरुलियभिसंतविमलदंड'मिति 'वैडूर्यो' वैडूर्यरत्नमयो भिसंतो–दीप्यमानो विमलोनिर्मलो दण्डो यस्य तत्तथा 'पलंबकोरंटमल्लदामोवसोहिय'मिति, प्रलम्बते इति प्रलम्बि तेन–प्रलम्बमानेन कोरण्टमाल्यदाम्ना–कोरण्टपुष्पमालयोपशोभितं

प्रलम्बकोरण्टमाल्यदामोपशोभितं चन्द्रमण्डलनिभं दीसया शोभया वर्तुलतया चन्द्रमण्डलाकारं समुत्सृतं सम्यगूर्ध्वीकृतं विमलमातपत्रं तथा प्रवरं सिंहासनं मणिरत्नैः भक्त्या—विच्छित्या चित्रं यत् तन्मणिरतन्भक्तिचित्रं, सह पादपीठं यस्य तत्सपादपीठं, तथा 'सपाउयाजोगसमाजुत्त'मिति, पादुकायोगः—पादुकाद्वितयं तस्य समायोगेन समायुक्तं सह पादुकायोगेन समायुक्तं यस्य तत्, तथा 'बहुकिङ्करामरपरिग्गहियमि'ति बहुभि किङ्करैः—किङ्करकल्पैरमरैः परिगृहीतं 'पुरतो' यथानुपूर्व्या सम्प्रस्थितं ।

तदनन्तरं 'वइरामयवट्टलट्ठसंठियसुसिलिट्ठपरिघट्ठमट्ठसुपइट्ठिए'त्ति, वज्रमयो—वज्ररत्नमयः तथा वृत्तं—वर्तुलं लष्टं—मनोज्ञं संस्थितं—संस्थानमाकारो यस्य स वृत्तलष्टसंस्थितः तथा सुश्लिष्टः—शुश्लेषापत्रावयवो मसृण इत्यर्थः परिघृष्ट इव परिघृष्टः खरशानया पाषाणप्रतिमावत् मृष्ट इव मृष्टः सुकुमारशाणया पाणाणप्रतिमेव सुप्रतिष्ठितो न तु तिर्यक्पतिततया वक्रः तत एतेषां पदानां पदद्वयमीलनेन कर्म्मधारयः, अत एव शेषध्वजेभ्यो विशिष्टः अतिशायी, तथा अनेकानि—अनेक-सङ्ख्याकानि वराणि—प्रधानानि पञ्चवर्ण्णानि कुडभीसहस्राणि उत्सृतानि यत्र सोऽनेकवर-पञ्चवर्ण्णकुडभीसहस्रोत्सृतः, क्तान्तस्य परनिपातो सुखादिदर्शनात्, वातोद्धूतविजयवैजयन्तीप-ताकाच्छत्रातिच्छत्रकलितः, तुङ्गः—अत्युच्चो योजनसहस्रप्रमाणोच्छ्रयत्वात्, तथा गगनतलम्—अम्बरतलमनुलिखत् शिखरम्—अग्रभागो अस्य स तथा योजनसहस्रमुत्सृतः अत एव 'महमहालए' इति।

अतिशयेन महान् महेन्द्रध्वजः 'पुरतो' यथानुर्व्या संप्रस्थितः । तदनन्तरं 'सुरूवनेवत्थ-परिकच्छिया' इति, सुरूपं नेपथ्यं परिकक्षितं—परिगृहीतं यैस्ते तथा, तथा सुष्ठु—अतिशयेन सज्जाः-परिपूर्णा स्वसामग्रीसमायुक्ततया प्रगुणीभूताः—सर्वालङ्कारविभूषिताः 'महता भडचडगर-पहकरेणं'ति महता—अतिशयेन भटचटकरपहकरेणचटकरप्रधानभटसमूहेन पञ्चानीकानि पञ्चानीकाधिपतयः 'पुरतो' यथाऽनुपूर्व्या सम्प्रस्थिताः । तदनन्दरं च सूर्याभविमानवासिनो बहवो वैमानिका देवा देव्यश्च सर्वर्ध्या यावत्करणात् 'सव्वजुईए सव्वबलेण'मित्यादि परिग्रहः, सूर्याभं देवं पुरतः पार्श्वतो मार्गतः—पृष्ठतः समनुगच्छति ।

**मू. (१७)** *तए णं से सूरियाभे देवे तेणं पंचानीयपरिखित्तेणं वइरामयवट्टलट्ठसंठिएण जाव जोयणसहस्समूसिएणं महतिमहालतेणं महिंदज्झएणं पुरतो कड्ढिज्जमाणेणं चउहिं सामानिय-सहस्सेहिं जाव सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहि य बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सव्विड्डिए जाव रवेणं —*

*—सोधम्मस्स कप्पस्स मज्झंमज्झेणं तं दिव्वं देविड्ढिं दिव्वं देवजुतिं दिव्वं देवानुभावं उवदंसेमाणे २ पडिजागरेमाणे २ जेणेव सोहम्मकप्पस्स उत्तरिल्ले निज्जाणमग्गे तेणेव उवागच्छति, २ जोयणसयसाहस्सितेहिं विग्गहेहिं ओवयमाणे वीतवयमाणे ताए उक्कट्ठाए जाव तिरियमसंखिज्जाणं दीवसमुद्दाणं मज्झंमज्झेणं वीइवयमाणे २ —*

*—जेणेव नंदीसरवरदीवे जेणेव दाहिणपुरच्छिमिल्ले रतिकरपव्वते तेणेव उवागच्छति २ त्ता तं दिव्वं देविड्ढिं जाव दिव्वं देवानुभावं पडिसाहरेमाणे२ पडिसंखेवेमाणे २ जेणेव जंबूद्दीवे २ जेणेव भारहे वासे जेणेव आमलकप्पा नयरी जेणेव अंबसालवणे चेइए जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ २ त्ता —*

—समणं भगवं महावीरं तेणं दिव्वेणं जाणविमाणेणं तिखुत्तो आयाहिणं पयाहिणं करेइ २ त्ता समणस्स भगवतो महावीरस्स उत्तरपुरच्छिमे दिसिभागे तं दिव्वं जायविमाणं ईसिं चउरंगुलसंपत्तं धरणितलंसि ठवेइ ठवित्ता चउहिं अग्गमहिसीहिं सपरिवाराहिं दोहि अनीयाहिं तंजहा गंधव्वाणिएण य नट्टाणिएण य सद्धिं संपरिवुडे ताओ दिव्वाओ जाणविमाणाओ पुरच्छिमिल्लेणं तिसोवाण- पडिरूवएणं पच्चोरुहति।

तए णं तस्स सूरियाभस्स देवस्स चत्तारि सामाणियसाहस्सीओ ताओ दिव्वाओ जाणविमाणाओ उत्तरिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहति, अवसेसा देवा य देवीओ य ताओ दिव्वाओ जाणविमाणाओ दाहिणिल्लेणं तिसोवाणपडिरूवएणं पच्चोरुहंति।

तए णं से सूरियाभे देवे चउहिं अग्गमहिसीहिं जाव सोलसहिं आयरक्खदेवसाहस्सीहिं अन्नेहिं य बहूहिं सूरियाभविमाणवासीहिं वेमाणिएहिं देवेहिं देवीहि य सद्धिं संपरिवुडे सव्विड्ढीए जाव नाइयरवेणं जेणेव समणे भगवं महावीरे तेणेव उवागच्छति २ त्ता समणं भगवं महावीरं तिखुत्तो आयाहिणपयाहिणं करेति २ त्ता वंदति नमंसति वंदित्ता नमंसित्ता एवं वयासी—

अहं णं भंते! सूरियाभे देवे देवाणुप्पियाणं वंदामि नमंसामि जाव पज्जुवासामि।

वृ. 'तएण'मित्यादि ततः स सूर्याभो देवः तेन पञ्चानीकपरिक्षितेन यथोक्तविशेषणविशिष्टेन महेन्द्रध्वजेन पुरतः प्रकृष्यमाणेन चतुर्भिः सामानिकसहस्रैश्चतसृभि सपरिवाराभिरग्रमहिषीभिस्तिसृभि पर्षद्भिः सप्तभिरनीकाधिपतिभि षोडशभिरात्मरक्षदेवसहस्रैरन्यैश्च बहुभि सूर्याभविमानावासिभिर्वैमानिकैर्देवैर्देवीभिश्च सार्द्धं सम्परिवृतः सर्वर्द्ध्या सर्वद्युत्या

यावत्करणात्—'सव्वबलेणं सव्वसमुदएणं सव्वादरेण सव्वविभूसाए सव्वविभूइए सव्वसंभमेणं सव्वपुप्फवत्थगंधमल्लालंकारेणं सव्वदिव्वतुडियसद्दसन्निनाएणं मया इड्ढीए महया जुइए महया बलेणं महया समुदएणं महया वरतुडियजमगसमयपडुप्पवाइयरवेणं संखपणवपडहभेरिझल्लरिखरमुहिहुडुक्कमुरमुइंगदुंदुभिनिग्घोसननाइयरवेण' मिति परिगृह्यते।

सौधर्मस्य कल्पस्य मध्येन तां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यां देवानुभूतिं 'कालेमाणे २' इति उपलालयन् २ लीलया उपभुञ्जान् इति भावः, येनैव सौधर्मस्य कल्पस्योत्तराहो निर्याणमार्गो--निर्गमनमार्गस्तेनैव प्राश्वेनोपागच्छति, 'ताए उक्किट्ठाए' इत्यादि पूर्ववद्यावत् दिव्यया देवगत्या योजनशतसहस्रकैः—योजनलक्षप्रमाणैर्विग्रहैः—क्रमैरवपतन्—अधस्तादवतरन् व्यतिव्रजंश्च—गच्छंश्च तिर्यग् असङ्ख्येयानां द्वीपसमुद्राणां मध्यंमध्येन 'जेणेव'त्ति नन्दीश्वरो द्वीपः यस्मिन् प्रदेशे यस्मिन्नेव च प्रदेशे तस्मिन्नन्दीश्वरे द्वीपे दक्षिणपूर्व—आग्नेयकोणवर्त्ती रतिकरनामा पर्वतस्तस्मिन्नुपागच्छति,—

—उपागत्य च तां दिव्यां देवर्द्धिं यावद् दिव्यं देवानुभावं शनैः २ प्रतिसंहरन् २ एतदेव पर्यायेण व्याचष्टे—प्रतिसङ्क्षिपन् २ यस्मिन् प्रदेशे जम्बूद्वीपो नाम द्वीपः तत्र च जम्बुद्वीपे यस्मिन् प्रदेशे भारतवर्षं तस्मिंश्च भारतवर्षे यस्मिन् प्रदशे आमलकल्पा नगरी तस्याश्चाऽऽमलकल्पायाया नगर्या बहिर्यस्मिन्प्रदेशे आम्रशालवनं चैत्यं तस्मिंश्च चैत्ये यस्मिन् प्रदेशे मणो भगवान् महावीरः 'तेणेवे'ति तत्रोपागच्छति, सर्वत्र तृतीया सप्तम्यर्थे द्रष्टव्या प्राकृतत्वात्, उपागत्य च श्रमणं भगवन्तं महावीरं तेन—प्रागुक्तस्वरूपेण दिव्येन यानविमानेन सह त्रिकृत्वः—त्रीन् वारान् आदक्षिण-

प्रदक्षिणीकरोति,

आदक्षिणप्रदक्षिणीकृत्य च श्रमण भगवतो महावीरस्यापेक्षया य उत्तरपूर्वो दिग्भागस्त-पक्रामति-गच्छति अपक्रम्य च तद् दिव्यं यानविमानमीषद् एतदेव प्रकटयति-चतुरङ्गुलं, चतुर्भिरङ्गुलैरित्यर्थ असम्प्राप्तं सत् धरणीतले स्थापयति स्थापयित्वा चतसृभिरग्रमहिषीभिः सपरिवाराभि द्वाभ्यामनीकाभ्या तद्यथा-गन्धर्वानीकेन नाट्यानीकेन च सार्द्धं सम्परिवृतस्तस्माद् दिव्यात् यानविमानात् पूर्वेण त्रिसोपानप्रतिरूपकेण प्रत्यवतरति, चत्वारि सामानिकदेव-सहस्राण्युत्तरेण, शेषा दक्षिणेन 'तए णमि' त्यादि, 'वंदामि नमंसामि जाव पज्जुवासामी'त्यत्र यावच्छब्दकरणात् 'सक्कारेमि सम्माणेमि कल्लाणं मंगलं देवयं चेइयं पज्जुवासेमि' इति परिग्रहः, ।

मू. (१८) *सूरियाभाति समणे भगवं महावीरे सूरियाभं देवं एवं वयासी पोराणमेयं सूरियामा जीयमेयं सूरियाभा ! किच्चमेयं सूरियाभा ! करणिज्जमेयं सूरियाभा ! आइन्नमेयं सूरि- याभा ! अब्भणुण्णायमेयं सूरियाभा ! जे णं भवणवइवाणमंतरजोइसवेमाणिया देवा अरहंते भगवंते वंदंति नमंसंति वंदित्ता नमंसित्ता तओ पच्छा-साइं साइं नामगोत्ताइं साहिंति, तं पोराणमेयं सूरियाभा ! जाव अब्भणुन्नायमेयं सूरियाभा ! ।*

वृ. ततः 'सूरियाभाइ' इत्यादि, सूरियाभात् आदिः-मुख्यः पर्युपासकतया यस्य स सूर्याभादि श्रमण भगवान् महावीरस्तं सूर्याभं देवमेवमवादीत्-'पोराणमेयमि'त्यादि प्राग्वत् ।

मू. (१९) *तए णं से सूरियाभे देवे समणेणं भगवया महावीरेणं एवं वुत्ते समाणे हट्ठ जाव समणं भगवं महावीरं वंदति नमंसति वंदित्ता नमंसित्ता नच्चासन्ने नातिदूरे सुस्सूसमाणे नमंसमाणे अभिमुहे विनएणं पंजलिउडे पज्जुवासति ।।*

वृ. 'नच्चासन्ने' इत्यादि, नात्यासन्नः-नातिनिकटोऽवग्रहपरिहारात् नात्यासन्ने वा स्थाने वर्त्तमान इति गम्यम् 'नाइदूरे' इति न-नैवातिदूरः-अतिविप्रकृष्टोऽनौचित्यपरिहारात् नातिदूरे वा 'सुस्सूसमाणे' इति भगवद्वचनानि श्रोतुमिच्छन् 'अभिमुहे' इति अभि-भगवन्तं लक्ष्यीकृत्य मुखमस्येति अभिमुख, भगवतः सम्मुख इत्यर्थ, विनयेन हेतुना 'पंजलिउडे' इति प्रकृष्टः-प्रधानो ललाटतटघटितत्वेन अञ्जलि-हस्तन्यासविशेषः कृतो येन स प्राञ्जलिकृतः, सुखादिदर्शनात् क्तान्तस्य परनिपातः, पर्युपास्ते-सेवते ।

मू. (२०) *तए णं समणे भगवं महावीरे सूरियाभस्स देवस्स तीसे य महतिमहालियाए परिसाए जाव परिसा जामेव दिसिं पाउब्भूया तामेव दिसिं पडिगया ।*

वृ. ततः श्रमणो भगवान् महावीरः सूर्याभस्य देवस्य श्वेतस्य राज्ञो धारणीप्रमुखानां च देवीनां तस्याश्च 'महइमहालिताए' इति अतिशयेन महत्या 'इसिपरिसाए' इति ऋषयः-त्रिकालदर्शिनिनस्तेषां पर्षत् तस्याः, अवध्यादिजिनपर्षद इत्यर्थः, मुनिपर्षदोयथोक्तानुष्ठाना-नुष्ठायिसाधुपर्षदः 'जतिपरिसाए' इति यतन्ते उत्तरगुणेषु विशेषत इति यततो-विचित्रद्रव्याद्यभिग्राहाद्युपेताः साधवस्तेषां पर्षदो यतिपर्षदः, 'विदुपरिसाए' इति विद्वत्परिषदः-अनेकविज्ञानपर्षदो देवपर्षदः इक्ष्वाकुपर्षदः क्षत्रियपर्षदः कौरव्यपर्षदः कथम्भूताया इत्याह ।

'अनेगसयाए' इति अनेकानि पुरुषाणां शतानि सङ्ख्यया यस्यां सा अनेकशता तस्याः 'अनेगवंदाए' इति अनेकानि वृन्दानि यस्याः सा तथा तस्याः, 'अनेगसयवंदपरिवाराए' इति

अनेकशतानि–अनेकशतसङ्ख्यानि वृन्दानि परिवारो यस्याः सा तथा तस्याः, 'महतिमहालियाए परिसाए' अतिशयेन महत्या पर्षदः 'ओहबले' इति ओघेन–प्रवाहेण बलं यस्य, न तु कथयतो बलहानिरुपजायते इति भावः।

'एवं जहा उववाइए तहा भाणियव्वमि'ति, एवं यथा औपपातिके ग्रन्थे तथा वक्तव्यं, तच्चैवं–'अइबले महाबले अपरिमियबलवीरियतेयमाहप्पकंतिजुत्ते सारदनवथणियमहुरगंभीरकुंचनिग्घोसदुंदुभिस्सरे उरेवित्थडाए कंठेवट्टियाए सिरेसमावन्नाए अगरलाए अमम्मणाए फुडविसयमहुरगंभीरगाहिगाए सव्वक्खरसन्निवाइयाए गिराए सव्वभासाणुगामिणीए सव्वसंसयविमोयणीए अपुणरुत्ताए सरस्सईए जोयणनीहारिणा सरेणं अद्धमागहाए भासाए भासइ अरिहाधम्मं परिकहेइ, तंजहा–अत्थि लोए अत्थि अलोए अत्थि जीवे अत्थि अजीवेत्यादि, तावत् यावत् तए णं सा महइमहालिया मणुस्सपरिसा।

*मू. (२१) तए णं से सूरियाभे देवे समणस्स भगवओ महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठ जाव हयहियए उट्ठाए उट्ठेति उट्ठित्ता समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता एवं वयासी–*

*अहन्नं भंते ! सूरियाभे देवे किं भवसिद्धिए अभवसिद्धते ? सम्मद्दिट्ठी मिच्छदिट्ठी ? परित्तसंसारिते अनंतसंसारिए ? सुलभबोहिए दुलभबोहिए ? आराहते विराहते ? चरिमे अचरिमे ?, सूरियाभाइ समणे भगवं महावीरे सूरियाभं देवं एवं वदासी।*

*सूरियाभा ! तुमं णं भवसिद्धिए नो अभवसिद्धिते जाव चरिमे नो अचरिमे।*

वृ. समणस्स भगवओ महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठा समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ करित्ता वंदइ नमंसइ २ त्ता एवं वयासी–सुयक्खाए णं भंते निग्गंथे पावयणे, नत्थि णं केई समणे माहणे वा एरिसं धम्ममाइक्खित्तए, एवं वइत्ता जामेव दिसिं पाउब्भूता तामेव दिसिं पडिगया।

तए णं सेए राया समणस्स भगवतो महावीरस्स अंतिए धम्मं सोच्चा निसम्म हट्ठतुट्ठचित्तमानंदिए जाव हरिसवसविसप्पमाणहियए समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता नमंसित्ता पसिणाइं पुच्छइ पुच्छित्ता अट्ठाइं परियाएइ परियाइत्ता उट्ठाए उट्ठेइ उट्ठित्ता समणं भगवं महावीरं वंदइ नमंसइ २ एवं वयासी–सुयक्खाए णं भंते ! निग्गंथे पावयणे जाव एरिसं धम्ममाइक्खित्तए, एवं वइत्ता हत्थिं दुरूहइ दुरूहित्ता समणस्स भगवतो महावीरस्स अंतियाओ अंबसालवनाओ चेइयाओ पडिनिक्खमइ पडिनिक्खमित्ता जामेव दिसिं पाउब्भूए तामेव दिसिं पडिगते" इति, इदं च प्रायः सकलमपि सुगमं नवरं यामेव दिशमवलम्ब्य, किमुक्तं भवति ? यतो दिशः सकाशात् प्रादुर्भूतः–समवसरणे समागतस्तामेव दिशं प्रतिगतः।

सम्प्रति सूर्याभो देवो धर्मदेशनाश्रवणतो जातप्रभूततरसंसारविरागः स्वविषयं भव्यत्वादिकं पिपृच्छिषुर्यत्करोति तदाह–'तए णमि'त्यादि, 'भवसिद्धिए' इति। भवैः सिद्धिर्यस्यासौ भवसिद्धिको, भव्य इत्यर्थः, तद्विपरीतोऽभवसिद्धिकः, अभव्य इत्यर्थ, भव्योऽपि कश्चिन्मिथ्यादृष्टिर्भवति कश्चित्सम्यग्दृष्टिस्तत आत्मनः सम्यग्दृष्टित्वनिश्चयाय पृच्छति–

सम्यगदृष्टिको मिथ्यादृष्टिकः, सम्यगदृष्टिरपि कश्चित्परिमितसंसारो भवति कश्चिद- परिमितसंसारः, उपशमश्रेणिशिरःप्राप्तानामपि केषाञ्चिदनन्तसंसारभावात्, अतः पृच्छति–परीत्त- संसारोकिऽ-नन्तसंसारिकः ?, परीत्तः–परिमितः स चासौ संसारश्च परीत्तसंसारः, परीत्तसंसा- रिकोऽपि कश्चित् सुलभबोधिको भवति यथा शालिभद्रादिकः, कश्चिद्दुर्लभबोधिको यथा पुरोहितपुत्रजीवः, ततः पृच्छति सुलभा बोधि–भवान्तरे जिनधर्म्मप्राप्तिर्यस्यासौ सुलभबोधिकः, एवं दुर्लभबोधिकः, सुलभबोधिकोऽपि कश्चिद्बोधिं लब्ध्वा विराधयति ततः पृच्छति– आराधयति– सम्यक् पालयति बोधिमित्याराधकः, तद्विपरीतो विराधकः, आराधकोऽपि कश्चित्तद्भवमोक्षगामी न भवति। ततः पृच्छति–चरमोऽचरमो वा ?, चरमोऽनन्तरभावी भवो यस्यासौ चरमः।

'अभ्रादिभ्य' इति मत्वर्थीयोऽप्रत्ययस्तद्विपरीतोऽचरमः, एवमुक्ते सूर्याभादि श्रमणो भगवान् महावीरस्तं सूर्याभं देवमेवमवादीत्–भोः सूर्याभ ! त्वं भवसिद्धिको नाभवसिद्धिकः, यावत्करणात् 'सम्मद्दिट्ठी नो मिच्छादिट्ठी परित्तसंसारिए नो अनंतसंसारिए सुल्लभबोहिए नो दुल्लभबोहिए आराहए नो विराहए' इति परिग्रहः।

मू. (२२) *तए णं से सूरियाभे देवे समणेणं भगवया महावीरेणं एवं वुत्ते समाणे हट्ठतुट्ठ चित्तमानंदिए परमसोमनस्से समणं भगवं महावीरं वंदति नमंसति २ एवं वदासी –*

*तुब्भे णं भंते ! सव्वं जाणह सव्वं पासह (सव्वओ जाणह सव्वओ पासह) सव्वं कालं जाणह सव्वं कालं पासह सव्वे भावे जाणह सव्वे भावे पासह जाणंति णं देवाणुप्पिया मम पुव्विं वा पच्छा वा ममेयरूवं दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवानुभागं लद्धं पत्तं अभिसमण्णागयंति*

*तं इच्छामि णं देवाणुप्पियाणं भत्तिपुव्वगं गोयमातियाणं समणाणं निग्गंथाणं दिव्वं देविड्ढिं दिव्वं देवजुइंदिव्वं देवानुभावं दिव्वं बत्तीसतिबद्धं नट्टविहिं उवदंसित्तए।*

वृ. तुब्भे णं भंते ! तुब्भे इति यूयं णमिति वाक्यालङ्कारे भदन्त ! सर्वं केवलवेदसा जानीथ सर्वं केवलदर्शनेन पश्यथ, अनेन द्रव्यपरिग्रहः, तत्र सर्वशब्दो देशकार्त्स्न्येऽपि वर्त्तते यथा अस्य सर्वस्यापि ग्रामस्यायमधिपतिरिति सचराचरविषयज्ञानदर्शनप्रतिपादनार्थमाह–'सव्वतो जाणह सव्वओ पासह' सर्वतः–सर्वत्र दिक्षु ऊर्ध्वमधो लोकेऽलोके चेति भावः, जानीथ पश्यथ च, अनेन क्षेत्रपरिग्रहः, तत्र सर्वद्रव्यसर्वक्षेत्रविषयं वार्त्तमानिकमात्रमपि ज्ञानं दर्शनं वा सम्भाव्येत ततः सकलकालविषयज्ञानदर्शनप्रतिपादनार्थमाह–सर्वकालम्–अतीतमनागतं वर्तमानं च जानीथ पश्यथ, एतेन कालपरिग्रहः, तत्र कश्चित् सर्वद्रव्यसर्वक्षेत्रसर्वकालविषयमपि ज्ञानं सर्वपर्यायविषयं न सम्भावयेत् यथा मीमांसकादि अत आह–सर्वान् भावान्–पर्यायान् प्रतिद्रव्यामात्मीयान् परकीयांश्च केवलवेदसा जानीथ केवलदर्शनेन पश्यथ, अथ भावा दर्शनविषया न भवन्ति ततः कथमुक्तं

'सव्वे भावे पासह' इति ?, नैष दोषः, उत्कलितरूपतया हि ते भावा दर्शनविषया न भवन्ति, अनुत्कलितरूपतया तु ते भवन्त्येव, तथा चोक्त्–''निर्विशेषं विशेषाणां, ग्रहो दर्शनमुच्यते,''इति, ततो 'जाणंति ण' मितिपूर्ववत् देवानां प्रियाः पूर्वमपि अनन्तरमुपदर्श्यमान-नाट्यविधेः पश्चादपि च उपदर्श्यमाननाट्यविधेः, उत्तरकालं मम एतद्रूपां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यं देवानुभावं लब्धं देशान्तरगतमपि किञ्चिद्भवति तत आह–प्राप्तं, प्राप्तमपि किञ्चिदन्तरायवशादनात्मवशं भवति तत आह–अभिसमन्वागतं, तत 'इच्छामि णमि' त्यादि,

इच्छामि णमितिपूर्ववत् देवानां प्रियाणां पुरतो भक्तिपूर्वकं—बहुमानपुरस्सरं गौतमादीनां श्रमणानां निर्ग्रन्थानां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यं देवानुभावमुपदर्शयितुं द्वात्रिंशद्विधं—द्वात्रिंशत्प्रकारं नाट्यविध—नाट्यविधानमुपदर्शयितुमिति।

*मू. (२३) तए समणेभगवं महावीये सूरियाभेणं देवेणं एवं वुत्ते समाणे सूरियाभस्स देवस्स एयमट्ठं नो आढाति नो परियाणति तुसिणीए संचिट्ठति।*

*तए णं से सूरियाभे देवे समणं भगवं महावीरं दोच्चंपि एवं वयासी—तुब्भे णं भंते! सव्वं जाणह जाव उवदंसित्तए तिकट्टु समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ २ वंदति नमंसति २ त्ता उत्तरपुरच्छिमं दिसीभागं अतिक्कमति २ त्ता वेउव्वियसमुग्घाएणं समोहणाते २ त्ता संखिज्जाइं जोयणाइं दंडं निस्सरति २ त्ता अहाबायरे० २ अहासुहुमे० २ दोच्चंपि विउव्विय-समुग्घाएणं जाव बहुसमरमणिज्जं भूमिभागं विउव्वति।*

*से जहानामए आलिंगपुक्खरे वा जाव मणीणं फासो, तस्स णं बहुसमरमणिज्जस्स भूमिभागस्स बहुमज्झदेसभागे पिच्छाघरमंडवं विउव्वति, अनेगखंभसयसंनिविट्ठं वण्णतो बहुसमरमणिज्जभूमिभागं विउव्वइ उल्लोयं अक्खाडगं मणिपेढियं च विउव्वति।*

*तीसे णं मणिपेढियाए उवरि सीहासणं सपरिवारं जाव दामा चिट्ठंति।*

*तए णं से सूरियाभे देवे समणस्स भगवतो महावीरस्स आलोए पणामं करेति २ त्ता अणुजाणउ मे भगवंतिकट्टु सीहासनवरगए तित्थयराभिमुहे सन्निसन्ने। तए णं से सूरियाभे देवे तप्पढमयाए नानामणिकणगरयणविमलमहनिहनिउणोवचियमिसिमिसिंतविरतियमहा-भरणकडगतुडियवरभूसणुज्जलं पीवरं पलंबं दाहिणं भुयं पसारेति।*

*तओ णं सरिसयाणं सरित्तयाणं सरिव्वयाणं सरिसलावण्णरूवजोव्वनगुणोववेयाणं एगाभरणवसणगहियणिज्जोआणं दुहतोसंवलियग्गणियत्थाणं आविद्धतिलयामेलाणं पिणिद्धगेविज्जकंचुयाणं उप्पीलियचित्तपट्टपरियरसफेणकावत्तरइयसंगय पलंबवत्थंतचित्तचिल्ल-गनियंसणाणं एगावलिकंठरइयसोभंतवच्छपरिहत्थभूसणाणं अट्ठसयं नट्टसज्जाणं देवकुमाराणं निग्गच्छति।*

*तयानंतरं च णं नानामणि जाव पीवरं पलंबं वामं भुयं पसारेति, तओ णं सरिसयाणं सरित्तयाणं सरिव्वतीणं सरिसलावण्णरूवजोव्वणगुणोववेयाणं एगाभरणवसणगहियनिज्जोयाणं दुहतोसंवेल्लियग्गनियत्थीणं आविद्धतिलयामेलाणं पिणद्धगेवेज्जकंचुतीणं नानामणिरयण-भूसणविराइयंगमंगाणं चंदाननानं चंदद्धसमनिलाडाणं चंदाहियसोमदंसणाणं उक्का इव उज्जोवेमाणीणं सिंगारागारचारुवेसाणं हसियभणियचिट्ठियविलाससललियसंलावनिउणजुत्तोवयार-कुसलाणं गहियाउज्जाणं अट्ठसयं नट्टसज्जाणं देवकुमारियाणं निग्गच्छइ।*

*तए णं से सूरियाभे देवे अट्ठसयं संखाणं विउव्वति अट्ठसयं संखवायाणं विउव्वइ अट्ठसयं सिंगां विउव्वइ अट्ठयसं सिंगवायाणं विउव्वइ अट्ठसयं संखियाणं विउव्वइ अट्ठसयं संखियवायाणं विउव्वइ अट्ठसयं खरमुहीणं विउव्वइ अट्ठसयं खरमुहियवाइयाणं विउव्वइ अट्ठसयं पेयाणं विउव्वति अट्ठसयं पेयावायगाणं अट्ठसयं पीरपीरियाणं विउव्वइ एवमाइयाइं एगूणपन्नं आउज्जविहाणाइं विउव्वइ २ त्ता तए णं ते बहवे देवकुमारा य देवकुमारीयाओ य सद्दावेति।*

तए णं ते बहवे देवकुमारा य देवकुमारीयो य सूरियाभेणं देवेणं सद्दाविया समाणा हट्ठ जाव जेणेव सूरियाभे देवे तेणेव उवागच्छंति तेणेव २ त्ता सूरियाभं देवं करयलपरिग्गहियं जाव वद्धावित्ता एवं वयासी–संदिसंतु णं देवाणुप्पिया ! जं अम्हेहिं कायव्वं ।

तए णं से सूरियाभे देवे ते बहवे देवकुमारा य देवकुमारीओ य एवं वयासी–गच्छह णं तुब्भे देवाणुप्पिया ! समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेह करित्ता वंदह नमंसह वंदित्ता नमंसित्तता गोयमाइयाणं समणाणं निग्गंथाणं तं दिव्वं देविड्ढिं दिव्वं देवजुतिं दिव्वं दिव्वानुभावं दिव्वं बत्तीसइबद्धं नट्ठविहिं उवदंसेह उवदंसित्ता खिप्पामेव एयमाणत्तियं पच्चप्पिणह ।

तए णं ते बहवे देवकुमारा देवकुमारिओ य सूरियाभेणं देवेणं एवं वुत्ता समाणा हट्ठजाव करयल जाव पडिसुणंति २ जेणेव समणे भगवं महावीरे तेणेव उवागच्छति २ समणं भगवं महावीरं जाव नमंसित्ता जेणेव गोयमादिया समणा निग्गंथा तेणेव उवागच्छंति ।

तए णं ते बहवे देवकुमारा देवकुमारियो समामेव समोसरणं करेंति, समा २ त्ता समामेव पंतिओ बंधंति, समामेव पंतिओ बंधित्ता समामेव पंतिओ नमंसंति समामेव २ सित्ता समामेव पंतीओ अवनमंति २ त्ता समामेव उन्नमंति २ एवं सहितामेव ओनमंति एवं सहितामेव उन्नमंति सहियामेव उन्नमित्ता थिमियामेव ओनमंति २ एवं सहितामेव ओनमंति एवं सहितामेव उन्नमंति सहियामेव उन्नमित्ता थिमियामेव ओनमंति थिमियामेव उन्नमन्ति संगयामेव ओनमंति संगयामेव उन्नमंति २ त्ता समामेव पसरंति २ त्ता समामेव आउज्जविहाणाइं गेण्हंति समामेव पवाएंसु पगाइंसु पणच्चिंसु, किं ते ?

उरेण मंदं सिरेण तारं कंठेण वितारं तिविहं तिसमयरेयगरइयं गुंजावक्ककुहरोवगूढं रत्तं तिठाणकरणसुद्धं सकुहरगुंजंतवंसतंतीलतालयगहसुसंपउत्तं महुरं समं सलिलियं मनोहरं मिउरिभियपयसंचारं सुरइ सुणइ वरचारुरूवं दिव्वं णट्टसज्जं गेयं पगीया वि होत्था, किं ते ?

उद्धमंताणं सखाणं सिंगाणं संखियाणं खरमुहीणं पेयाणं परपिरियाणं आहंमंताणं पणवाणं पडहाणं अप्फालिज्जमाणाणं भंभाणं होरंभाणं तालिज्जंताणं भेरीणं झल्लरीणं दुंदुहीण आलिवंताणं (मुरयाणं) मुइंगाणं नंदीमुइंगाणं उत्तालिज्जंताणं आलिंगाणं कुंतुंबाणं गोमुहीणं मद्दलाणं मुच्छिज्जंताणं वीणाणं विपंचीणं वल्लकीणं कुट्टिज्जंताणं महंतीणं कच्छभीणं वित्तवीणाणं सारिज्जंताणं बद्धीसाणं सुघोसाणं नंदिघोसाणे फुट्टिज्जंतीणं भामरीणं छब्भामरीणं परिवायणीणं छिप्पंतीणं तूणाणं तुंबवीणाणं

–आमोडिज्जंताणं कुंभाणं नउलाणं अच्छिज्जंतीणं मुगुंदाणं हुडुक्कीणं विचिक्कीणं वाइज्जंताणं करडाणं डिंडिमाणं किणियाणं कडंबाणं वाइज्जंताणं इद्दरगाणं दद्दरिगाणं कुतुंबाणं कलसियाणं मडुयाणं आयडिज्जंताणं तलाणं तालाणं कंसतालाणं घट्टिज्जंताणं रिंगिरिसियाणं लत्तियाणं मगरियाणं सुसुमारियाणं फूमिज्जंताणं वंसाणं वेलूणं वालीणं परिल्लीणं बद्धगाणं, –

तए णं से दिव्वे गीए दिव्वे नट्टे दिव्वे वाइए एवं अब्भुए सिंगारे उराले मणुन्ने मनहरे गीते मनहरे नट्टे मनहरे वातिए उप्पिंजलभूते कहकहभूते दिव्वे देवरमणे पवत्तेयावि होत्था, तए णं ते बहवे देवकुमारा य देवकुमारीओ य समणस्स भगवओ महावीरस्स सोत्थियसिरिवच्छणं दियावत्तवद्धमाणगभद्दासकलसमच्छदप्पणमंगल्लभत्तिचित्तं नामं दिव्वं नट्टविधिं उवदंसेंति ।

वृ. 'तए णमि'त्यादि, ततः श्रमणो भगवान् महावीरः सूर्याभेण देवेन एवमुक्तः सन् सूर्याभस्य देवस्यैनम्– अनन्तरोदितमर्थं नाद्रियते–न तदर्थकरणायादरपरो भवति, नापि परिजानाति–अनुमन्यते, स्वतो वीतरागत्वात् गौतमादीनां च नाट्यविधेः स्वाध्यायादिविघातकारित्वात्, केवलं तूष्णीकोऽवतिष्ठते, एवं द्वितीयमपि वारं, तृतीयमपि वारमुक्तः सन् भगवानेवमवतिष्ठति 'तए णमि'त्यादि, ततः पारिणामिक्या बुद्ध्या तत्त्वमवगम्य मौनमेव भगवत उचितं न पुनः किमपि वक्तुं, केवलं मया भक्तिरात्मीयोपदर्शनीयेति प्रमोदातिशयतो जातपुलकः सन् सूर्याभो देवः श्रमणं भगवन्तं महावीरं वन्दते–स्तौति नमस्यति–कायेन वन्दित्वा नमस्थित्वा च 'उत्तरपुरच्छिमं दिसीभागमि'त्यादि सुगमं, नवरं बहुसमभूमिवर्णनप्रेक्षागृहमण्डपवर्णनमणिपीठिकासिंहासनतदुपर्युल्लोचाङ्कुशमुक्तादामवर्णनानि च प्राग्वद् भावनीयानि ।

'तए णमि'त्यादि, ततः सूर्याभो देवस्तीर्थङ्करस्य भगवतः आलोके प्रणामं करोति, कृत्वा चानुजानातु भगवान् मामित्यनुज्ञापनां कृत्वा सिंहासनवरगतः सन् तीर्थकराभिमुखः सन्निषण्णः 'तए णमि'त्यादि, ततः सूर्याभो देवः 'तत्प्रथमतया' तस्य–नाट्यविधेः प्रथमतायां दक्षिणं भुजं प्रसारयति, कथम्भूतमित्याह–'नानामणिकणगरयणविमलमहारिहनिपुणोवचियमिसिमिसिंतविरइयमहाभरणकडगतुडियवरभूसणुज्जलं' इति नानाविधानि मणिकनकरत्नानि येषु तानि नानामणिकनकरत्नानि, मणयो नानाविधाश्चन्द्रकान्तादयः कनकानि नानाविधानि नानवर्णतया रत्नानि नानाविधानि कर्केतनादीनि, तथा विमलानि–निर्मलानि तथा महान्तमुपभोक्तारमर्हन्ति यदिवा महम्–उत्सवं क्षणमर्हन्तीति महार्हाणि तथा निपुणं–निपुणबुद्धिगम्यं यथा भवति एवं 'ओविया' इति परिकर्मितानि 'मिसिमिसंति' दीप्यमानानि विरचितानि महाभरणानि यानि कटकानि कलाचिकाभरणानि तुटितानि–बाहुरक्षका अन्नयानि च यानि वरभूषणानि तैरुज्ज्वलं–भास्वरं तथा पीवरं–स्थूलं प्रलम्बं–दीर्घं ।

'तए णमि'त्यादि, ततः–तस्माद् दक्षिणभुजात् अष्टशतम्–अष्टाधिकं शतं देवकुमाराणां निर्गच्छति, कथम्भूतानामित्याह–सदृशानां, समानाकाराणामित्यर्थः, तत्राकारेण कश्चित् सदृशोऽपि वर्णतः सदृशो न भवति ततः सदृगवर्ण्णत्वकप्रतिपादनार्थमाह–'सरित्तयाण'मिति, सदृशी–सदृग् वर्ण्णत्वक् येषां ते तथा, सदृक्त्वगपि कश्चित् वयसा विसदृशः सम्भाव्येत तत आह–'सरिव्वयाणं' सदृक्–समानं वयो येषां ते तथा तेषां 'सरिसलावण्णरूवजोव्वणगुणोववेयाण'मिति सदृशेन लावण्येन–लवणिम्ना अतिसुभगया शरीरकान्त्येति भावः, रूपेण–आकृत्या यौवनेन–यौवनिकया गुणैः–दक्षत्वप्रियंवदत्वादिभिरुपपेताः सदृशलावण्यरूपयौवनगुणोपपेतास्तेषां, 'एगाभरणवसनगहियनिज्जोगाणमि'ति एकः–समानः आभरणवसनादि– आभरणवसनलक्षणो गृहीतो निर्योगः–उपकरणमर्थान्नाट्योपकरणं यैस्ते तथा तेषां ।

'दुहओ संवेल्लियग्गनियत्थाणं'ति द्विधातो–द्वयोः पार्श्वयोः संवेल्लितानि संवृत्तानि अग्राणि यस्य तद् द्विधातःसंवेल्लिताग्रं न्यस्तं सामर्थ्यादुत्तरीयं यैस्ते तथा तेषां तथा उप्पीलियचित्तपट्टपरियरसफेणगावत्तरइयसंगयपलंबवत्थंतचित्तचिल्ललगनियंसणाण'मिति, उत्पीडितः–अत्यन्ताबद्धश्चित्रपट्टो–विचित्रवर्ण्णपट्टरूपः परिकरो यैस्ते तथा यस्मिन्नावर्त्तने फेनविनिर्गमो भवति स सफेनकावर्त्त उच्यते ततः सफेनकावर्तेन रचिता सङ्गता–नाट्यविधावुपपन्नाः प्रलम्बा वस्त्रान् यस्य

निवसनस्य तत्तथा तत् चित्रं–चित्रवर्ण्णं चिल्ललगं-देदीप्यमानं निवसनं–परिधानं येषां ते तथा, ततः पूर्वपदेन विशेषणसमासस्तेषां, 'एगावलिकंठरइय-सोभंतव-च्छपरिहत्थभूस-णाण'मिति, एकावलिर्या कण्ठे रचिता तया शोभमानं वक्षो येषां ते तथा, परिहत्थशब्दो देश्यः परिपूर्ण्णवाचकः, पडिहत्थानि–पूर्ण्णानि भूषणानि येषां ते तथा, ततः पूर्वपदेन कर्मधारयस्तेषां, 'नट्टसज्जाणं' नृत्ये सज्जाः– प्रगुणीभूतानृत्यसज्जास्तेषां ।

तदनन्तरं च यथोक्तविशेषणविशिष्टं वामं भुजं प्रसारयति, तस्माद्–वामभुजात् अष्टशतं देवकुमारिकाणां विनिर्गच्छति, कथम्भूतमित्याह–'सरिसयाणं सरित्तयाणं सरिव्वयाणं सरिसलावण्णरूवजोव्वणगुणोववेयाणं एगाभरणवसणगहियनिज्जोईणं दुहतोसंवेल्लियग्गनियत्थणमि'ति पूर्ववत् 'आविद्धतिलयामेलाणं' आविद्धस्तिलक आमेलश्च–शेखरको यकाभिस्ता आविद्धतिलकामेलास्तासां 'पिणद्धगेवेज्जकञ्चुकाण'मिति, पिनद्धं ग्रैवेयकं–ग्रीवाभरणं कञ्चुकश्च यकाभिस्तास्तथा तासां, 'नानामणिकणगरयणभूसणविराइयंगमंगीण'मिति, नानाविधानि मणिकनकरत्नानि येषु भूषणेषु तानि नानामणिकनकरत्नानि तैर्नानामणिकनकरत्नैर्भूषणैर्विराजितान्यङ्गमङ्गानि–अङ्गप्रत्यङ्गानि यासां तास्तथा तासां, 'चंदाननाणं चन्दद्धसमनिडालाणं चन्दाहियसोमदंसणाणं उक्का इव उज्जोवेमाणीण'मिति सुगमं 'सिङ्गारागारचारुवेसाणं हसियभणियचिट्ठियविलाससललियसंलावणिउणजुत्तोवयारकुसलाणं गहियाउज्जाणं नट्टसज्जाण'मिति पूर्ववत्

'तए णं से सूरियाभे देवे' इयादि, ततः (स) सूर्याभो देवोऽष्टशतं शङ्खानां विकुर्वति, अष्टशतं शङ्खवादकानाम् १, अष्टशतं शृङ्गाणामष्टशतं शृङ्गवादकानां २ अष्टशतं शङ्खिकानां अष्टशतं शङ्खिकावादकानां २, ह्रस्वःशङ्खो जात्यन्तरात्मकः शङ्खिका, तस्या हि स्वरो मनाक् तीक्ष्णो भवति, न तु शङ्खवदतिगम्भीरः, तथा अष्टशतं खरमुखीनां–काहलानां अष्टशतं खरमुखीवादकानाम् ३, अष्टशतं पेयाना, पेया नाम महत्ती काहला, अष्टशतं पेयावादकानां ४, अष्टशतं पीरिपीरिकाणां कौलिकपुटावनद्धमुख वाद्यविशेषरूपाणामष्टशतं पीरिपीरिवादकानां ५ अष्टशतं पणवानां, पणवो–भाण्डपटहो लघुपटहो वा अष्टशतं होरम्भाणां, होरम्भा–महाढक्का अष्टशतं होरम्भावादकानां ९ अष्टशतं भेरीणां–ढक्काकृतिवाद्यविशेषरूपाणामष्टशतं भेरीवादकानां १० अष्टशतं झल्लरीणां झल्लरीनाम–चर्मावनद्धा विस्तीर्ण्णवलयाकारा अष्टशतं झल्लरीवादकानां ११ अष्टशतं दुन्दुभीनाम- ष्टशतं दुन्दुभिवादकानां दुन्दुभिर्भेर्याकारा सङ्कटमुखी देवातोद्यविशेषः १२

अष्टशतं मुरुजानां महाप्रमाणो मर्दलो मुरुजः अष्टशतं मुरुजवादकानां १३ अष्टशतं मृदङ्गोऽष्टशतं मृदङ्गवादकानां १४ अष्टशतं नन्दीमृदङ्गाना नन्दीमृदङ्गो नाम एकतः सङ्कीर्ण्णोऽन्यत्र विस्तृतो मुरजविशेषः, अष्टशतं नन्दीमृदङ्गवादकानां १५ अष्टशतमालिङ्गानां आलिङ्गो–मुरजवाद्यविशेष एवाष्टशतमालिङ्गवादकानां १६ अष्टशतं कुस्तुम्बाना कुस्तुम्बः–चर्मावनद्धपुटो वाद्यविशेषः अष्टशतं कुस्तुम्बवादकानां १७ अष्टशतं गोमुखीनां, गोमुखी लोकतोऽवसेया, अष्टशतं गोमुखीवादकानां १८ अष्टशतं मर्द्दलानां, मर्द्दलः–उभयतः समः, अष्टशतं मर्दलवादकानां १९ अष्टशतं विपञ्चीनां, विपञ्ची–त्रितन्त्री वीणा, अष्टशतं विपञ्चीवादकानां २०, अष्टशतं वल्लकीनां, वल्लकी–सामान्यतो वीणा, अष्टशतं वल्लकीवादकानां २१ अष्टशतं भ्रामरीणामष्टशतं भ्रामरीवादकानां २२ अष्टशतं षड्भ्रामरीणामष्टशतं षड्भ्रामरीवादकानां २३ अष्टशतं परिवादिनीनां परिवादीनी–

सप्ततन्त्री वीणा अष्टशतं परिवादिनीवादकानां २४।

अष्टशतं वव्वीसानामष्टशतं वव्वीसावादकानां २५ अष्टशतं सुघोषाणामष्टशतं सुघोषा-वादकानां २६ अष्टशतं नन्दिघोषाणामष्टशतं नन्दीघोषवादकानां २७ अष्टशतं महतीनां, महती–शततन्त्रिका वीणा अष्टशतं महतीवादकानां २८ अष्टशतं कच्छभीनामष्टशतं कच्छभीवादकानां २९ अष्टशतं चित्रवीणानां अष्टशतं चित्रवीणावादकानां ३० अष्टशतमामोदानामष्टशतं आमोदवाद-कानां ३१ अष्टशतं झञ्झानामष्टशतं झञ्झावादकानां ३२ अष्टशतं नकुलानां अष्टशतं नकुलवाद-कानां ३३ अष्टशतं तूणानामष्टशतं तूणावादकानां ३४ अष्टशतं तुम्बवीणानां तम्बयुक्ता वीणा या तुम्बवीणा अद्यकल्यप्रसिद्धा अष्टशतं तुम्बवीणावादकानां ३५ अष्टशतं मुकुन्दानां, मुकुन्दो–मुरुजवाद्यविशेषो योऽतिलीनं प्रायो वाद्यते अष्टशतं मुकुन्दवादकानां ३६।

अष्टशतं हुडुक्कानामष्टशतं हुडुक्कावादकानां हुडुक्का प्रतीता ३७, अष्टशतं चिचि (विचि) क्कनामष्टशतं चिचि (विचि) क्कवादकानां ३८, अष्टशतं करटीनामष्टशतं करटीवादकानां, करटी प्रतीता ३९ अष्टशतं डिण्डिमानामष्टशतं डिण्डिमवादकानां, प्रथमप्रस्तावनास्तवकः पण-वविशेषः डिण्डिमः ४०, अष्टशतं किणितानामष्टशतं किणतवादकानां ४१ अष्टशतं कडवानाम- ष्टशतं कडवावादकानां, कडवा–करटिका ४२, अष्टशतं दर्दरकाणामष्टशतं दर्दरवाकानां, दर्दरकः प्रतीतः ४३, अष्टशं दर्दरिकाणामष्टशतं दर्दरिकावादकानां लघुदर्दरको दर्दरिका ४४ अष्टशतं कुस्तुम्बराणामष्टशत कुस्तुम्बरवादकानां ४५ अष्टशतं कलशिकानामष्टशतं कलशिकावादकानां ४६, अष्टशतं कलशानमिष्टशतं कलशवीदकानां ४७, अष्टशतं तालानामष्टशतं तालवादकानां ४८।

अष्टशतं कास्यतालानामष्टशतं कांस्यतोलवादिकानां ४९,

अष्टशतं रिंगिसकानामष्टशतं रिंगिसिकावादकानां ५०, अष्टशतमङ्गरिकाणाम-ष्टशतमङ्गरिकावादकानां ५१, अष्टशतं शिशुमा- रिकाणामष्टशतं शिशुमारिकावादकानां ५२, अष्टशतं वंशानामष्टशतं वंशवावकानां ५३ अष्टशतं वालीनामष्टशतं वालीवादकानां, वाली–तूणविशेषः, स हि मुखे दत्वा वाद्यते ५४, अष्टशतं वेणूनामष्टशतं वेणुवादकानां ५५, अष्टशतं परिलीनामष्टशतं परिलीवादकानां ५६, अष्टशतं बद्धकानामष्टशतं बद्धकवादकानां, बद्धकस्तूणविशेषः ५७।

अव्याख्यायास्तु भेदा लोकतः प्रत्येतव्याः, एवमादीनि बहन्यातोद्यानि आतोद्यवादकांश्च विकुर्वति, सर्वसङ्ख्यया तु मूलभेदापेक्षयाऽऽतोद्यभेदा एकोनपञ्चाशत्, शेषास्तु भेदा एतेष्वेवान्त-र्भवन्ति, यथा वंशातोद्यविधाने वालीवेणुपरिलीवव्वगा इति। 'एवमाइयाइं एगुणपन्नं आतोज्जवि-हाणाइं विउव्वइ' इति, विकुर्व्वित्वा च तान् स्वयंविकुर्वितान् देवकुमारान् देवकुमारिकाश्च शब्दयति, ते च शब्दिता हृष्टतुष्टानन्दितचिताः सूर्याभसमीपमागच्छन्ति, आगत्य न करतलपरिगृहीतं दशनखं शिरसावर्त्त च मस्तकेऽञलिं कृत् जयेन विजयेन वर्द्धापयित्वा एवमवादिषुः–सन्दिशन्तु देवानां प्रिया यदस्माभि कर्त्तव्यं, ततः स सूर्याभो देवस्तान् बहून् देवकुमारान् देवकुमारिकाश्च एवमवा-दीत्–गच्छत यूयं देवानां प्रियाः श्रमणं भगवन्तं महावीरं त्रिकृत्व आदक्षिणप्रदक्षिणं कुरुत कृत्वा च वन्दध्वं नमस्यत वन्दित्वा नमस्यित्वा गौतमादीनां श्रमणानां निर्ग्रन्थानां तां देवजनप्रसिद्धां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यं देवानुभावं दिव्यं द्वात्रिंशद्विधं नाट्यविधिमुपदर्शयत।

उपदर्श्य चैतामाज्ञप्तिकां क्षिप्रमेव प्रत्यर्पयत। 'तए णमि' त्यादि, ततस्ते बहवो देवकुमारा देवकुमारिकाश्च सूर्याभेन देवेन एवमुक्ताः सन्तो हृष्ट यावत्प्रतिशृण्वन्ति, अभ्युपगच्छन्तीत्यर्थः, प्रतिश्रुत्य च यत्र श्रमणो भगवान्महावीरस्तत्रोपागच्छति उपागत्य च श्रमणं भगवन्तं महावीरं त्रिकृत्व आदक्षिणप्रदक्षिणीकुर्वन्ति कृत्वा च वन्दन्ते नमस्यन्ति वन्दित्वा नमस्यित्वा च यस्मिन्प्रदेशे गौतमादयः श्रमणास्तत्र समकमेव-एककालमेव समवसरन्ति, मिलन्तीत्यर्थः, समवसृत्य च समकमेव-एककालमेव अवनमन्ति-अधो नीचा भवन्ति, अवनम्य च समकमेव उन्नमन्ति, ऊर्ध्वमवतिष्ठन्ते इति भावः।

तदनन्तरं चैवं क्रमेण सहितं सङ्गतं स्तिमितं चावनमनमुन्नमनं च वाच्यम्, अमीषां च सहितादीनां भेदः सम्यक्काशलोपेतनाट्योपाध्यायादेवागन्तव्यः, ततः स्तिमितं समयमुन्नमय समकमेव प्रसरन्ति, प्रसृत्य च समकमेव यथायोगमातोद्यविधानानि गृह्णन्ति, गृहीत्वा च समकमेव प्रवादितवन्तः समकमेव प्रगीतवन्तः समकमेव प्रनर्तितवन्तः, 'किन्ते' इत्यादि किञ्च ते देवकुमारा देवकुमारिकाश्च एवं प्रगीता अप्यभवन्निति योगः, कथमित्याह-'उरेण मंद'मित, सर्वत्र सप्तम्यर्थे तृतीया, उरसि मन्दं यथा भवति एवं प्रगीताः, 'शिरेण तारं कण्ठेन वितार' मिति शिरसि कण्ठे च तारं अतशयेन यथावल्लक्षणोपेतं, किमुक्तं भवति ? उरसि प्रथमतो गीतमुत्क्षिप्यते उत्क्षेपकाले च गीतं मन्दं भवति, 'आदिमिउमारभंता' इति वचनात्, अन्यथा गीतगुणक्षतेः, तत उक्तं 'उरसि मन्द'मिति, ततो गायतां मूर्द्धानमभिधन् स्वर उच्चैस्तरो भवति, स्थानकं च द्वितीयं तृतीयं वा समधिरोहति।

ततः शिरसि तारमित्युक्तं, शिरसश्च प्रतिनिवृत्तः सन् स्वरः कण्ठे घुलति घुलंश्चातिमधुरो भवति ततः कण्ठे वितारमित्युक्तं तिविहंतिसमयरेयगरइयमिति, 'गुंजावंककुहरोवगूढं' गुञ्जनं गुञ्जा गुञ्जाप्रधानानि यानि अवक्राणि-शब्दमार्गाप्रतिकूलानि कुहराणि तेषूपगूढं गुञ्जाऽ-वक्रकहरोपगूढं, किमुक्तं भवति ? -तेषां देवकुमाराणां देवकुमारिकाणां च तस्मिन् प्रेक्षागृहमण्डपे गायता गीतं तेषु प्रेक्षागृहमण्डपसक्तेष्वन्येषु च कुहरेषु स्वानुरूपाणि प्रतिशब्दसहस्राण्युत्पादयद्वर्त्तते इति, 'रत्तमि'ति रक्तं इह यत् येगरागानुरक्तेन गीतं गीयते तत् रक्तमिति तद्विदां प्रसिद्धा, 'तिट्ठाणकरणसुध्ध' मिति त्रीणि स्थानानि-उरःप्रभृतीनि तेषु करणेन-क्रियया शुद्धं त्रिस्थान-करणशुद्धं, तद्यथा-उरःशुद्धं कण्ठशुद्धं शिरोविशुद्धं च, तत्र यदि उरसि स्वरः स्वभूमिकानुसारेण विशालो भवति तत उरोविशुद्धं स एव यदि कण्ठे वर्त्तितो भवति अस्फुटितश्च ततः कण्ठविशुद्धं यदि पुनः शिरः प्राप्तः सन् सानुनासिको भवति ततः शिरोविशुद्धं, यदि वा यत उरःकण्ठशिरोभि श्लेष्मणा अव्याकुलितैर्विशुद्धैर्गीयते तत उरःकण्ठशिरोविशुद्धत्वात्त्रिस्थानकरणविशुद्धं, तथा सकुहरो गुञ्जन् यो वंशो ये च तन्त्रीतलतालतालयग्रहास्तेषु सुट्ठु-अतिशयेन सम्प्रयुक्तं सकुहरगुञ्जद्वंश-तन्त्रीतलताललयग्रहसुसम्प्रयुक्तं, किमुक्तं भवति ?

सकुहरे वंशे गुञ्जति तन्त्र्यां च वाद्यमानायां यद्वंशतन्त्रीस्वरेणाविरुद्धं तत् सकुहरगुञ्जद्वंश-तन्त्रीसुसम्प्रयुक्तं, तथा परस्पराहतहस्ततलस्वरानुवर्त्ति यत् यत् तलसुसम्प्रयुक्तं, यत् मुरजकंशि-कादीनामातोद्यानामहतानां यो ध्वनि पादोत्क्षेपो यश्च नृत्यतां नर्त्तिकापादोत्क्षेपस्तेन समं तत् तालसुसम्प्रयुक्तं, तथा शृङ्गमयो दारूमयोदन्मयो वा योऽङ्गुलिकोशिकस्तेनाहतायास्तन्त्र्याः

स्वरप्रकारो लयस्तमनुसरन् गेयलयसुसम्प्रयुक्तं, तथा यः प्रथमं वंशतन्त्र्यादिभि स्वरो गृहीतस्त-नमार्गानुसारि ग्रहसुसम्प्रयुक्तं, तथा 'महुरि'ति मधुरस्वरेण गीयमानं, मधुरं कोकिलारुतवत्, तथा 'समभि'ति तलवंशस्वरादिसमनुगतं समं 'सललियं'ति यत्स्वरघोलनाप्रकारेण ललतीव तत् सह ललितेन--ललनेन वर्तते इति सललितं, यदि वा इति यत् श्रोत्रेन्द्रियस्य शब्दस्पर्शनमतीव सूक्ष्ममुत्पादयति सुकुमारमिव च प्रतिभासते तत्सललितमिति, अत एव मनोहरं, पुनः कथम्भूत-मित्याह—'मउरिभितपदसञ्चारं' तत्र मृदुर्मृदुनास्वरेण युक्तो न निष्ठुरेण तथा यत्र स्वरोऽक्षरेषु घोलनास्वरविशेषेषु च सञ्चरन् रङ्गतीव प्रतिभासते (स) पदसञ्चारो रिभित उच्यते।

मृदुरिभितः पदेषु गेयनिबद्धेषु संचारो यत्र गेये तन्मृदुरिभितपदसञ्चारं, तथा 'सुरइ' इति शोभना रतिर्यस्मिन् श्रोतॄणां ततः सुरति तथा शोभना नतिर्नामोऽवसानो यस्मिन् तत् सुनति तथा वरं—प्रधानं चारु—विशिष्टचङ्गिमोपेतं रूपं—स्वरूपं यस्य तद्वरचारुरूपं दिव्यं प्रधानं नृत्तसज्ज गेयं प्रगीता अप्यभवन्, 'किं ते' इत्यादि, किञ्च ते देवकुमारा देवकुमारिकाश्च प्रगीतवन्तः प्रनर्त्तितवन्तश्च 'उद्धुमंताणं संखाणमि'त्यादि, अत्र सर्वत्रापि षष्ठी सप्तम्यर्थे, ततोऽयमर्थो—यथा-योगमुद्ध्मायमानादिषु शङ्खादिषु, इह शङ्खशृङ्गशङ्खिकाखरमुहीपेयापिरिपिरिकाणां बानमुद्ध्मानमिति प्रसिद्धं, प्रणवपटहानामामोटनं भंभाहोरम्भाणामास्फालनं भेरीझल्लरीदुन्दुभीनां ताडनं मुरजमृदङ्गनन्दीमृदङ्गानामालपनं।

आलिङ्गकुस्तुम्बगोमुखीमर्दलानामुत्तालनं वीणाविपञ्चीवल्लकीनां मूर्च्छनं भ्रामरीषड्-भ्रामरीपरिवादनीनां स्पन्दनं बध्वीसा (बव्वीसा) सुघोषनन्दिघोषाणां सारणं महतीकच्छपीचित्र-वीणानां कुट्टनं आमोदझञ्झानकुलानामामोटनं तुम्बतूणवीणानां स्पर्शनं मुकुन्दहुडुक्का-विचिक्काकडवानां मूर्च्छनं करटाडिंडिमकिणिककडंबानां वादनं दर्दरदर्दरिकाकुस्तुम्ब-रुकलसिकामड्डुकानामुत्ताडनं तलतालकंतालानामाताडनं रिङ्गिसिकालत्तिकामकरिकाशिशुमारि-काणां घट्टनं वंशवेणुवालीपिरलीपिरलीबध्धगानां फुंकनमत उक्तं 'उद्धुमंताणं संखाणं' मित्यादि, 'तए णं से दिव्वे गीए' इत्यादि, यत एवं प्रगीतवन्त इत्यादि, ततो णमिति पूर्ववत् तद्दिव्यं गीतं दिव्यं वादितं दिव्यं नृत्तमभवदितियोगः, दिव्यं नाम प्रधानं, 'एवमब्भुए गीए' इत्यादि, 'अब्भुए गीए अब्भुए वाइए अब्भुए नट्टे' अद्भुतं—आश्चर्यकारि 'सिंगारे वाइए सिंगारे नट्टे' सिंगारं—शृङ्गारं शृङ्गाररसोपेतत्वात्।

अथवा शृङ्गारंनामलङ्कृतमुच्यते, तत्र यदन्यान्यविशेषकरमेनालङ्कृतमिव गीतं वादनं नृत्तं वा तत् शृङ्गारमिति, 'उराले गीए उराले वाइए उराले नट्टे' उदारं—स्फारं परिपूर्णगुणोपेतत्वात्, नतु कथिदपि हीनं, 'मणुण्णे गीए मणुण्णे वाइए मणुन्ने नट्टे' मनोज्ञं—मनोऽनुकूलं द्रष्टणां श्रोतॄणां च मनोनिर्वृतिकरमिति भावः, तच्च मनोनिर्वृतिकरत्वं सामान्यतोऽपि स्यात् अतः प्रकर्षविशेष-प्रतिपानार्थमाह— 'मनहर' इति, 'मनहरे गीए मनहरे वाइए मनहरे नट्टे' मनो हरति—आत्मवशं नयति तद्विदामप्यतिचमत्कारकारितयेति मनोहरम्, एतदेवाह—'उप्पिंजलभूते' उप्पिंजलम्—आकुलकं उप्पिंजलभूते आकुलके भूते, किमुक्तं भवति।

महर्द्धिकदेवानामप्यतिशायितया परमक्षोभोत्पादकत्वेन सकलदेवासुरमनुजसमूहचि-त्ताक्षेपकारीति, 'कहकहभूते' इति कहकहेत्यनुकरणं, कहकहेति भूतं—प्राप्तं कहकहभूतं, किमुक्तं

भवति ? निरन्तरं तद्विदेषदर्शनतः समुच्छलितप्रमोदभरपरवशसकलदिक्चक्रवालवर्त्तिप्रेक्षक-जनकृतप्रशंसावचनबोलकोलाहलव्याकुलीभूतामिति, अत एव दिव्यं देवरमणमपि देवानामपि रमणं--क्रीडनं प्रवृत्तमभूत् । 'तए णं ते बहवे दुवकुमारा य' इत्यादि, ततस्ते बहवो देवकुमारा देवकुमारिकाश्च श्रमणस्य भगवतो महावीरस्य पुरतो गौतमादिश्रमणानां स्वस्तिकश्रीवत्सनन्द्याय-वर्त्तवर्द्धमानकभद्रासनकलशमत्स्यदर्पणरूपाणामष्टानां मङ्गलकानां भक्त्या–विच्छित्या चित्रम्–आलेखनमाकारभिधानं वा यस्मिन् स स्वस्तिकश्रीवत्सनन्द्यावर्त्तवर्द्धमानकभद्रासनकल-शमत्स्यदर्पणमङ्गलभक्तिचित्रः ।

एवं सर्वत्रापि व्युत्पत्तिमात्रं यथायोगं परिभावनीयं, सम्यग्भावना तु कर्त्तुं न शक्यते, यतोऽमीषां नाट्यविधीनां सम्यक् स्वरूपप्रतिपादनं पूर्वान्तर्गते नाट्यविधिप्राभृते, तच्चेदानीं व्यवच्छिन्नमिति प्रथमं दिव्यं नाट्यविधिमुपदर्शयति,

**मू. (२४)** *तए णं ते बहवे देवकुमारा य देवकुमारीओ य सममेव समोसरणं करेंति २ त्ता तं चेव भाणियव्वं जाव दिव्वे देवरमणे पवत्तेयावि होत्था, तए णं ते बहवे देवकुमारा य देवकुमारीओ य समणस्स भगवओ महावीरस्स आवडपच्चावडसेढिपसेढिसोत्थियसोवत्थिअ- पूसमाणग-मच्छंडमगरंडजारामाराफुल्लावलिपउमपत्तसागरतरंगवसंतलतापउमलय भत्तिचित्तं नाम दिव्वं नट्टविहिं उवदंसेंति ।*

*एवं च एक्केक्कियाए नट्टविहीए समोसरणादीया एसा वत्तव्वया जाव दिव्वे देवरमणे पवत्तेवि यावि होत्था । तए णं ते बहवे देवकुमारा देवकुमारियाओ य समणस्स भगवतो महावीरस्स ईहामिहउसभतुरगनरमगरविहगवालगकिंनररुरुसरभचमरकुंजरवमलयपउमलयभत्तिचित्तं नामं दिव्वं नट्टविहिं उवदंसेंति ३ ।*

*–एगतो वक्कं दुहओ वक्कं (एगतो खुहं दुहओ खुहं) एगो चक्कवालं दुहओ चक्कवालं चक्कद्धचक्कवालं ४ नामं दिव्वं नट्टविहिं उवदंसंति चंदावलिपविभत्तिं च वलियावलिपविभत्तिं च हंसावलिपविभत्तिं च सूरावलिपविभत्तिं च एगावलिपविभत्तिं तारावलिपविभत्तिं च मुत्तावलि-पविभत्तिं च कणगावलिपविभत्तिं च रयणावलिपविभत्तिं च णामं दिव्वं नट्टविहं उवदंसेंति ५ ।*

*–चंदुग्गमनपविभत्तिं सुरुग्गमणपविभत्तं च उग्गमनुग्गमणपविभत्तिं च नामं दिव्वं नट्टविहं उवदंसेंति ६ चंदागमणपविभत्तिं च सूरागमणपविभत्तिं च आगमनागमनपविभत्तिं च नामं दिव्वं नट्टविहं उवदंसेंति ७ चंदावरणपविभत्तिं च सूरावरणपविभत्तिं च नामं दिव्वं नट्टविहं उवदंसेंति ८ ।*

*–चंदत्थमनपविभत्तिं च सूरत्थमणपविभत्तिं च अत्थमणऽत्थमणपविभत्तिं नाम दिव्वं नट्टविहं उववदंसंति ९ चंदमंडलपविभत्तिं च सूरमंडलपविभत्तिं च नागमंडलपविभत्तिं च जक्खमंडल-पविभत्तिं च भूतमंडलपविभत्तिं च (रक्खस० महोरग० गंधव्व० मंडलपविभत्तिं च) मंडलपविभत्ति माणं दिव्वं नट्टविहं उवदंसेंति १० उसभललियवक्कंतं सीहललियवक्कंतं हयविलंबियं गयविलंबियं मत्तहयविलसियं मत्तगयविलसियं दुयविलंयं नामं दिव्वं नट्टविहिं उवदंसंति ११ ।*

*–सागरपविभत्तिं च नागरपविभत्तिं च सागरनागरपविभत्तिं च नामं दिव्वं नट्टविहं उवदंसंति १२ नंदापविभत्तिं च चंपापविभत्तिं च नंदाचंपापविभत्तिं च मं दिव्वं नट्टविहं १३ मच्छंडा-पविभत्तिं च मयरंडापविभत्तिं च जारापविभत्तिं च मारापविभत्तिं च मच्छंडामयरंडाजारामारापविभत्तिं*

*च नामं दिव्वं नट्टविहिं उवदंसेंति १४ कत्तिककारपविभत्तिं च खत्तिखकारपविभत्तिं च गत्तिगकारपविभत्तिं च घत्तिघकारपविभत्तिं च ङत्तिङकारपविभत्तिं च ककारखकारगकारघकारङकारपविभत्तिं च नामं दिव्वं नट्टविहिं उवदंसेंति १५ ।*

*--एवं चकारवग्गोवि १६ टकारवग्गोवि १७ तकारवग्गोवि १८ पकारवग्गोवि १९ असयपल्लवपविभत्तिं च अंबपल्लवपविभत्तिं च जंबूपल्लवपविभत्तिं च कोसंबपल्लवपविभत्तिं च पल्लव २ पविभत्तिं च नामं दिव्वं नट्टविहं उवदंसेंति २० पउमलयापविभत्तिं च जाव सामलयापविभत्तिं च लयालयापविभत्तिं च नामं दिव्वं नट्टविहं उवदंसेंति २१ ।*

*--दुयनामं नट्टविहं उवदंसेंति २२ विलंबियं नामं नट्टविहिं २३ दुयविलंबियं नामं नट्टविहिं २४ अंचियं २५ रिभियं २६ अंचियरिभियं २७ आरभडं २८ भसोलं २९ आरभडभसोलं ३० उप्पयनिवयपत्तं संकुचियं पसारियं रयारइयं भंतसंभंतणामं दिव्वं नट्टविहिं उवदंसेंति ३१ ।*

*--तए णं ते बहवे देवकुमारा य देवकुमारीयाओ य समामेव समोसरणं करेंति जाव दिव्वे देवरमणे पवत्ते यावि होत्था तए णं ते बहवे देवकुमारा य देवकुमारीओ य समणस्स भगवओ महावीरस्स पुव्वभवचरियनिबद्धं च (देवलोयचरियनिबद्धं च) चवणचरियनिबद्धं च संहरणचरियनिबद्धं च जम्मणचरियनिबद्धं च अभिसेअचरियनिबद्धं च बालभावचरियनिबद्धं च जोव्वणचरियनिबद्धं च कामभोगचरियनिबद्धं च निक्खमणचरियनिबद्धं च तवचरणचरियनिबद्धं च (नाणुप्पायचरियनिबद्धं च) तित्थपवत्तणचरियनिब्परिनिव्वाणचरियनिबद्धं च चरिमचरियनिबद्धं च नामं दिव्वं नट्टविहिं उवदंसेंति ३२ ।*

*तए णं ते बहवे देवकुमारा य देवकुमारीयाओ य चउव्विहं वाइत्तं वाएंति, तंजहा--ततं विततं घणं झुसिरं, तए णं ते बहवे देवकुमारा य देवकुमारीओ य चउव्विहं गेयं गायंति, तंजहा--उक्खित्तं पायत्तं मंदायं रोइयावसाणं च ।*

*तए णं ते बहवे देवकुमारा य देवकुमारियाओ य चउव्विहं नट्टविहिं उवदंसंति, तंजहा-अंचियं रिभियं आरभडं भसोलं च, तए णं ते बहवे देवकुमारा य देवकुमारियाओ य चउव्विहं अभिनयं अभिनयेंति, तंजहा--दिट्ठंतियं पाडितियं समांतोवणिवाइयं अंतोमज्झावसाणियं ।*

*तए णं ते बहवे देवकुमारा य देवकुमारियाओ य गोयमादियाणं समणाणं निग्गंथाणं दिव्वं देविड्ढिं दिव्वं देवजुत्तिं दिव्वं देवाणुभागं दिव्वं बत्तीसइबद्धं नाडयं उवदंसित्ता समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ २ त्ता वंदंति नमंसंति वंदित्ता नमंसित्ता जेणेव सूरियाभे देवे तेणेव उवागच्छन्ति तेणेव उवागच्छित्ता सूरियाभं देवं करयलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु जएणं विजएणं वद्धावेंति २ त्ता एवमाणत्तियं पच्चप्पिणंति ।*

**वृ.** ततो द्वितीयं नाट्यविधिमुपदर्शयितुकामा भूयोऽपि प्रागुक्तप्रकारेण समकं समवसरणादिकं कुर्वन्ति, तथा चाह--'तए णं ते बहवे देवकुमारा य देवकुमारीओ य समकमेव समोसरणं करेंति' इत्यादि प्रागुक्तं तदेव तावद्वक्तव्यं यावत् 'दिव्वे देवरमणे पवत्ते यावि होत्था' इति ।

'तए णमि'त्यादि, ततस्ते बहवो देवकुमारा देवकुमारिकाश्च श्रमणस्य भगवतो महावीरस्य पुरतो गौतमादीनां श्रमणानां आवर्त्तप्रत्यावर्त्तश्रेणिप्रश्रेणिस्वस्तिकपुष्पमाणवकवर्द्धमानकमत्स्याण्डकमकराण्डकजारमारपुष्पावलिपद्मपत्रसागरतरङ्गवासन्तीलापद्मलताभक्तिचित्रं नाम

द्वितीयं नाट्यविधिमुपदर्शयन्ति २ ।

तदनन्तरं तृतीयं नाट्यविधिमुपदर्शयितु भूयस्तथैव समवसरणादिकं कुर्वन्ति, एवं समवसरणादिकणविधिरेकैकस्मिन्नाट्यविधौ प्रत्येकं २ तावद्वक्तव्यो यावद्देवरमणे पवत्ते यावि त्था इति तत ईहामृगऋषभतुरगनरमकरविहगव्यालकिन्नररुरुसरभचमरकुञ्जरवनलता-पद्मलताभक्तिचित्रं ना तृतीयं दिव्यं नाट्यविधिमुपदर्शयन्ति ३, तदनन्तरं भूयोऽपि समवसर-णादिविधिकरणानन्तरमेकतो चक्कं—एकतश्चक्रवालं द्विधातश्चक्रवालं चक्रार्द्धचक्रवालं नाम चतुर्थं दिव्यं नाट्यविधिमुपदर्शयन्ति ४ ।

तदनन्तरमुक्तविधिपुरस्सरं चन्द्रावलिप्रविभक्ति सूर्यावलिप्रविभक्ति वलयावलिप्रविभक्ति हंसावलिप्रविभक्ति एकावलिप्रविभक्ति तारावलिप्रविभक्ति मुक्तावलिप्रविभक्ति कनकाव-लिप्रविभक्ति रत्नावलिप्रविभक्तयभिनयात्मकमावलिप्रविभक्तिं नाम पञ्चमं नाट्यविधि-मुपदर्शयन्ति ५ तदनन्तरमुक्तक्रमेण चन्द्रोद्गमप्रविभक्तिसूर्योद्गमप्रविभक्तियुक्तमुद्गमनोद्ग-मनप्रविभक्तिं नाम षष्ठं नाट्विधिमुपदर्शयन्ति ६ ततू उक्तप्रकारेण चन्द्रगमनप्रविभक्तिसूर्यागमन-प्रविभक्तियुक्तमावरणावरणप्रविभक्तितनामकमष्टमं नाट्यविधिं ८ ।

तत उक्तक्रमेणैव चन्द्रास्तमयनप्रविभक्तिसूर्यास्तमयनप्रविभक्तियुक्तमस्तमयन-प्रविभक्तिनामकं नवमं नाट्यविधिं ९ तत उक्तप्रकारेण चन्द्रमण्डलप्रविभक्तिसूर्यमण्ड-लप्रविभक्तिनागमण्डलप्रविभक्तियक्षमण्डलप्रविभक्ति भूतमण्डलप्रिभक्तियुक्तं मण्डल-प्रविभक्तिनामंक दशमं दिव्यं नाट्यविधिं १० तदनन्तरं उक्तक्रमेण ऋषभमण्डलप्रविभक्ति -सिंहमण्डलप्रविभक्तिहयविलम्बितगजविलम्बितहयविलसितगजविलसितमत्तहयविलसितमत्तगजविल सितमत्तहयविलंबितमत्तगजविलंबितं विलंबिताभिनयं द्रुतविलम्बितं नाम एकादशं नाट्यविधिं ११ तदनन्तरं सागरप्रविभक्तिनागरप्रविभक्तिअभिनयात्मकं सागरनागरप्रविभक्तिनाम द्वादशं नाट्यविधिं १२ ।

ततो नन्दाप्रविभक्ति चम्पाप्रविभक्तयात्मकं नन्दाचम्पाप्रिभक्तिनाम त्रयोदशं नाट्यविधिं १३ ततो मत्स्याण्डकप्रविभक्तिमकराण्डकप्रविभक्तिजारप्रविभक्तिमारप्रविभक्तियुक्त मत्स्याण्डकमकराण्डकजारमारप्रविभक्तिनाम चतुर्दशं नाट्यविदिंध१४ तदनन्तरं क्रमेण क इति ककारप्रविभक्ति, ख इति खकारप्रवि० ग इति गकारप्र० घ इति घकारप्र० ङ इति ङकार-प्रविभक्तिरित्येवं क्रमभाविककारादिप्रविभक्तिअभिनयात्मकं ककारखकारगकारघकार-ङकारप्रविभक्तिनामंक पञ्चदशं दिव्यं नाट्यविधिं १५ ।

एवं चकारछकारजकारझकारञकारप्रविभक्तिक नामकं षोडशं दिव्यं नाट्यविधिं १६ टकारठकारडकारढकारणकारप्रविभ्तिनमकं सप्तदशं दिव्यं नाट्यविधिं १७ तकारथकारद-कारधकारनकारप्रविभक्तिनामंक अष्टादशं नाट्यविधिं १८ पकारफकारबकारभकारमकार-प्रविभक्तिनामकमेकनोविंशतितमं दिव्यं नाट्यविधिं १९ ततोऽशोकपल्लवप्रविभक्त्याम्रप-ल्लवप्रविभक्तिजम्बूपल्लवप्रविभक्ति कोशम्बपल्लवप्रतिभक्त्यभिनयात्मकं पल्लप्रविभक्ति नामंकं विंशतीतम दिव्यं नाट्यविधिं २० । तदनन्तरं पद्मलताप्रविभक्तिनागलताप्रविभक्ति अशोक-लताप्रविभक्ति चम्पकलताप्रविभक्तिचूलताप्रिविभक्तिनामकमेकविंशतितमं दिव्यं नाट्यविधिं

२१ तदनन्तरं द्रुतं नाम द्वाविंशतितमं २५ रिभितं नाम षड्विंशतितमं २६ अञ्चितरिभितनाम सप्तविंशतितमं २७ आरभटं नाम अष्टाविंसतितमं २८ भसोलं नाम एकोनत्रिंशति(त)मं २९ आरभटभसोलं नाम त्रिंसत्तमं ३० तदनन्तरमुत्पातिपातप्रसक्तं सङ्कुचितप्रसारितरेचकरचितं भ्रान्तसम्भ्रान्तं नाम एकत्रिंशत्तमं दिव्यं नाट्यविधिमुपदर्शयन्ति ३१।

तदनन्तरं च श्रमणस्य भगवतो महावीरस्य चरमपूर्वमनुष्यभवचरमच्यवनचरमगर्भसंहरणचरमभरतक्षेत्रावसर्पिणीतीर्थकरजन्माभिषेकचरमबालभावचरमयौवनचरमकामभोगचरमनिष्क्रमणचरमतपश्चरणचरमज्ञानोत्पादचरमतीरथप्रवर्त्तनचरमपरिनिर्वाणनिबद्धं चरमनिबद्धं नाम द्वात्रिंशत्तमं दिव्यं नाट्यविधिमुपदर्शयन्ति ३२।

तदनन्तरं बहवो देवकुमारा देवकुमारिकाश्च नाट्यविधिपरिसमाप्तिमङ्गलभूतं चतुर्विधं वादित्रं वादयन्ति, तद्यथा–ततं–मृदङ्गपडहादि विततं–वीणादि घनं–कंसिकादि सुषिरं–शङ्खकाहलादि, तदनन्तरं चतुर्विधं गीतं गायन्ति, तद्यथा–उत्क्षिप्तं प्रथमतः समारभ्यमाणं पादान्तं पादवृद्धं वृद्धादिचतुर्भागरूपपादबद्धमितिभावः, 'मन्दाय' मिति मध्यभागे मूर्च्छनादिगुणपेततया मन्दं मन्दं घोलनात्मकं रोचितावसानमिति–रोचितं यथोक्तलक्षणोपेततया भावितं सत्यापितामितियावत् अवसानं यस्य तद्रोचितावसानं।

'तए ण'मित्यादि, ततश्चतुर्विधं नर्त्तनविधिमुपदर्शयन्ति, तद्यथा–'अञ्चित'मित्यादि, 'तएण'मित्यादि, ततश्चतुर्विधमाभिनयमभिनयन्ति, तद्यथा–दार्ष्टान्तिकं प्रात्यन्तिकं सामान्यतो विनिपातं लोकमध्यावसानिकमिति, एते नर्त्तनविधयोऽभिनयविधयश्च नाट्यकुशलेभ्यो वेदितव्याः 'तए णं ते बहवे देवकुमारा देवकुमारीओ' इत्यादि उपसंहारसूत्रं सुगमं।

**मू. (२५)** *तए णं से सूरियाभे देवे तं दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवानुभावं पडिसाहरइ पडिसाहरेत्ता खणेणं जाते एगे एगभूए तए णं से सूरियाभे देवे समणं भगवं महावीरं तिक्खुत्तो आयाहिणपयाहिणं करेइ वंदति नमंसति वंदित्ता नमंसित्ता नियगपरिवालसद्धिं संपरिवुडे तमेव दिव्वं जाणविमाणं दुरुहति जामेव दिसिं पाउब्भऊयआ तामेव दिसिं पडिगया।*

**वृ.** नवरं 'एगभूए' इति एकभूतः अनेकीभूयैकत्वं प्राप्त इत्यर्थः, 'नियगपरियाल सद्धिं संपरिवुडे' इति, निजकपरिवारेण सार्द्ध संपरिवृतः।

**मू. (२६)** *भंतेति भयवं गोयमे समणं भगवं महावीरं वंदति नमंसति २ एवं वयासी–सूरियाभस्स णं भंते! देवस्स एसा दिव्वा देविड्ढी दिव्वा देवजुत्ती दिव्वे देवानुभावे कहिं गते कहिं अनुप विट्ठे?, गो०! सरीरं गते सरीरं अनुपविट्ठे।*

*से केणट्ठेणं भंते! एवं वुच्चइ?–सरीरं गते सरीरं अनुपविट्ठे?, गो०! से जहानामए कूडागारसाला सिया दुहतो लित्ता दुहतो गुत्ता गुत्तदुवारा निवाया निवायगंभीरा, तीसे णं कूडागारसालाते अदूरसामंते एत्थ णं महेगे जनसमूहे चिट्ठति,।*

*तए णं से जनसमूहे एगं महं अब्भवद्दलगं वा वासवद्दलगं वा महावायं वा इज्जमाणं पासति २ ता तं कूडागारसालं अंतो अनुपविसित्ता णं चिट्ठइ, से तेणट्ठेणं गोयमा! एवं वुच्चति–सरीरं अनुपविट्ठे।*

**वृ.** भदन्तेत्यामन्त्रणपुरस्सरं भगवान् गौतमः श्रमणं भगवन्तं महावीरं वदन्ते नमस्यति

वन्दित्वा नमस्यित्वा 'एवं' वक्ष्यमाणप्रकारेणावादीत्, पुस्तकान्तरे त्विदं वाचनान्तरं दृश्यते, 'तेणं कालेणं तेणं समएणं समणस्स भगवओ महावीरस्स जिट्ठे अंतेवासी' इत्यादि, अस्य व्याख्या– तस्मिन् काले तस्मिन् समये णंशब्दो वाक्यालङ्कारार्थं, श्रमणस्य भगवतो महावीरस्य 'ज्येष्ठ' इति प्रथमोऽन्तेवासी–शिष्यः, अनेन पदद्वयेन तस्य सकलसङ्काधिपतित्वमावेदयति, इन्द्रभूतिरिति मातापितृकृतं नामधेयंनामेतिप्राकृतत्वात् विभक्तिपरिणामेन नाम्नेति द्रष्टव्यं, एवमन्यत्रापि यथायोगं भावनीयम्, अन्तेवासी च किल विवक्षायां श्रावकोऽपि स्यादतस्तदाशङ्काव्यवच्छेदार्थमाह

'अनगारः' न विद्यते अगारं–गृहमस्येत्यनगारः, अयं च विगीतगोत्रोऽपि सम्भाव्येतात आह–गौतमो गोत्रेण गौतमाह्वयगोत्रसमन्वित इत्यर्थ, अयं च तत्कालोचितदेहपरिमाणापेक्षया न्यूनाधिकदेहोऽपि स्यादत आह–समोत्सेधः–सप्तहस्त प्रमाणशरीरोच्छ्रायः, अयं चेत्थम्भूतो लक्षणहीनोऽपि शङ्क्येतातस्तदाशङ्कापनोदार्थमाह–'समचउरंससंठाणसंठिए'इति, समाः– शरीरलक्षणशास्त्रोक्तप्रमाणाविसंवादिन्यश्चतस्रोऽस्रयो यस्य तत् समचतुरस्रं अस्रयस्त्विह चतुर्दिग्विभागोपलक्षिताः शरीरावयवा द्रष्टव्याः।

अन्ये त्वाहुः–समा–अन्यूनाधिकाश्चतस्रोऽप्यस्रयो तत्र तत् समचतुरस्रं तच्च तत् संस्थानं च, संस्थानम्–आकारः तच्च, वामदक्षिणजान्वोरन्तरं आसनस्य ललाटोपरिभागस्य चान्तरं वामस्कन्धस्य दक्षिणजानुनश्चान्तरमिति, अपरे त्वाहुः–विस्तारोत्सेधयोः समत्वात् समचतुरस्रं तच्च तत्संस्थानं च २, संस्थानम्–आकारस्तेन संस्थितो–व्यवस्थितो यः स तथा 'जावउड्ढाए उट्ठेइ' इति यावत्करणात् 'वज्ररिसहसंघयणे कणगपुलगनिघसपम्हगोरे उग्गतवे दित्ततवे महातवे उराले घोरे घोरगुणे घोरतवस्सी घोरबंभचेरवासी उच्छूढसरीसे संखित्तविपुलतेयलेसे चउदसपुव्वी चउनाणोवए सव्वक्खरसन्निवाई समणस्स भगवतो महावीरस्स अदूरसामन्ते उड्ढंजाणु अहोसिरे झाणकोट्ठोवगए संजमेणं तवसा अप्पाणं भावेमाणे विहरइ।

तए णं से भगवं गोयमे जायसड्ढे जायसंसए जायकोउहल्ले उप्पन्नसड्ढे उप्पन्नसंसए उप्पन्नकोउहल्ले संजायसड्ढे संजायसंसए संजायकोउहल्ले समुप्पन्नसड्ढे समुप्पन्नसंसए समुप्पन्नकोउहल्लेउड्ढाए उट्ठेइ' इति द्रष्टव्यं, तत्र नाराचमुभयतो मर्कटबन्धः ऋषभस्तदुपरि वेष्टनपट्टः कीलिका अस्थित्रयस्यापि भेदकमस्थि एवंरूपं संहननं यस्य स तथा, तथा कनकस्य– सुवर्णस्य यः पुलको–लवस्तस्य यो निकषः–कषपट्टके रेखारूपस्तथा पद्मग्रहणेन पद्मकेस- राण्युच्यन्ते अवयवे समुदायोपचारात् यथा देवदत्तस्य हस्ताग्ररूपोऽवयवोऽपि देवदत्तः, तथा च देवदत्तस्य हस्ताग्रं स्पृष्ट्वा लोकोवदति–स्पृष्टो मया देवदत्त इति।

कनकपुलकनिकषवत् पद्मवच्च यो गौरः स कनकपुलकनिकषपद्मगौरः, अथवा कनकस्य यः पुलको–द्रवत्वे सति बिन्दुस्य निकषो वर्णतः सदृशः कनकपुलकनिकषः, तथा पद्मवत्– पद्मकेसरवत् यो गौरः स पद्मगौरः, ततः पदद्वयस्य कर्म्मधारयसमासः, अयं च विशिष्टचरणर- हितोऽपि शङ्क्येत तत आह–'उग्गतवे' इति, उग्रम्–अधृष्यं तपः–अनशनादि यस्य स तथा, यदन्येन प्राकृतेन पुंसा न शक्यते चिन्तयितुमपि मनसा तद्विधेन तपसा युक्त इत्यर्थ, तथा दीप्तं– जाज्वल्यमान दहन इव कर्म्मवनगहनदहनसमर्थतया ज्वलितं तपो–धर्म्मध्यानादि यस्य स तथा, 'तत्ततवे' इति तप्तं तपो येन स तप्ततपाः, एवं हि तेन तपस्तप्तं येन सर्वाण्यपि अशुभानि कर्माणि

भस्मसात् कृतानीति 'महातवे' इति महान्–प्रशस्तमाशंसादोषरहितत्वात् तपो यस्य स महातपाः, तथा 'उरहाले' इति, उदारः–प्रधानः अथवा उरालो–भीष्मः उग्रादिविशिष्टतपःकरणतः पार्श्वस्थानामल्पसत्वानामतिप्रभानक इति भावः ।

तथा घोरो–निर्घृणः परीषहेन्द्रियादिरिपुगणविनाशनमधिकृत्य निर्दय इतियावत्, तथा घोरा–अन्यैर्दुरनुचरा गुणा मूलगुणादयो यस्य स घोरगुणः, तथा घोरैस्तपोभिस्तपस्वी घोरतपस्वी, 'घोरबंभचेरवासी' इति घोरं–दारुणमल्पसत्वैर्दुरनुचरत्वात् ब्रह्मचर्यं यत् तत्र वस्तुं शीलं यस्य स तथा, 'उच्छूढसरीरे' इति उच्छूढम्–उज्झितमिवोज्झितं संस्कारपरित्यागात् शरीरं येन स उच्छूढशरीरः, 'संखित्तविउलतेउलेसे' इति सङ्क्षिप्ता–शरीरान्तर्गतत्वेन ह्रस्वतां गता विपुला–विस्तीर्ण्णा अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्थत्वात् तेजोलेश्या–विशिष्टतपोजन्यलब्धिविशेषप्रभवा तेजोज्वाला यस्य स तथा, 'चउदसपुव्वी' इति चतुर्द्दश पूर्व्वाणि विद्यन्ते यस्य तेनैव तेषां रचितत्वात् असौ चतुर्द्दशपूर्वी, अनेन तस्य श्रुतकेवलितामाह, स चावधिज्ञानादिविकलोऽपि स्यादत आह –

'चउनाणोवगए' मतिश्रुतावधिमनःपर्यायज्ञानचतुष्टयसमन्वितः, उक्तविशेषणद्वययुक्योऽपि कश्चिन्न समग्रश्रुतविषयव्यापिज्ञानो भवति चतुर्द्दशपूर्वविदामपि षट्स्थानपतितत्वेन श्रवणादत आह– 'सर्वाक्षरसन्निपाती' अक्षराणां सन्निपाताः–संयोगाः अक्षरसन्निपाताः सर्वे च ते अक्षरसन्निपाताश्च सर्वाक्षरसन्निपातास्ते यस्य ज्ञेयाः स तथा, किमुक्तं भवति ?–या काचित् जगति पदानुपूर्वी वाक्यानुपूर्व्वी वा संभवति ताः सर्वा अपि जानातीति, एवंगुणविशिष्टो भगवान् विनयराशिरिव साक्षादितिकृत्वा शिष्याचारत्वाच्च श्रमणस्य भगवतो महावीरस्यादूरसामन्ते विहरतीति योगः, तत् दूरं–विप्रकृष्टं सामन्तं–सन्निकृष्टं तत्प्रतिषेधाददूरसामन्तं ततो नातिदूरे नातिनिकटे इत्यर्थः, किंविशिष्टः सन् तत्र विहरतीत्यत आह–

'उड्ढंजाण अहोसिरे' ऊर्ध्वं जानुनी यस्यासावूर्ध्वजानुः अधःशिरा नोर्ध्वं तिर्यग्वा विक्षिप्तदृष्टि किन्तु नियतभूभागनियमितदृष्टिरित्यर्थः, 'झाणकोट्ठोवगए' इति ध्यानं–धर्मध्यानं शुक्लध्यानं च तदेव कोष्ठः कुशूलो ध्यानकोष्ठस्तमुपगतो ध्यानकोष्ठपगतो, यथा हि कोष्ठके धान्यं प्रक्षिप्तमविप्रसृतं भवति एवं भगवानपि ध्यानतोऽविप्रकीर्णेन्द्रियान्तःकरणवृत्तिरित्यर्थः, 'संयमेन' पञ्चाश्रवनिरोदिलक्षणेन तपसाअनशनादिना चशब्दोऽत्र समुच्चयार्थो लुप्तो द्रष्टव्यः, संयमतपोग्रहणमनयोः प्रधानमोक्षाङ्गत्ताख्यापनार्थं, प्राधान्यं संयमस्य नवकर्मानुपादानहेतुत्वेन तपसश्च पुराणकर्म्मनिर्जराहेतुत्वेन, तथाहि–अभिनवकर्म्मानुपादानात् पुराणकर्म्मक्षपणाच्च जायते सकलकर्म्मक्षयलक्षणो मोक्षस्ततो भवति संयमतपसोर्मोक्षं प्रति प्राधान्यमिति 'अप्पाणं भावेमाणे विहरति' इति, आत्मानं वासयन् तिष्ठति ।

'तए णं' मित्यादि, ततो ध्यानकोष्ठोपगतविहरणादनन्तरं 'ण' मिति वाक्यालङ्कारे स भगवान् गौतमो 'जातसड्ढे' इत्यादि, जातश्रद्धादिविशेषणविशिष्टः सन् उत्तिष्ठतीति योगः, तत्र जाता–प्रवृत्ता श्रद्धा–इच्छा वक्ष्यमाणार्थतत्वावगमं प्रति यस्यासौ जातश्रद्धः तथा जातः संशयो यस्य स जातसंशयः, संशयो नाम अनवधारितार्थं ज्ञानं, स चैवं–इत्तं नामास्य दिव्या देवर्द्धिर्विस्तृता अभवत् इदानीं सा क्व गतेति, तथा 'जायकुतूहले' इति जातं कुतूहलं यस्य स जातकुतूहलः, जातौत्सुक्य

इत्यर्थः, तता कथममुमर्थं भगवान् प्ररूपयिष्यति इति, तथा 'उप्पन्नसड्ढे' उत्पन्ना प्रागभूता सती भूता श्रद्धा यस्यासौ उत्पन्नश्रद्धः अथ जातश्रद्ध इत्येतदेवास्तु किमर्थमुत्पन्नश्रद्ध इति, प्रवृत्तश्रद्ध-त्वेनैवोत्पन्नश्रद्धत्वस्य लब्धत्वा, न हिं अनुत्पन्ना श्रद्धा प्रवर्त्तते इति, अत्रोच्यते, हेतुत्वप्रदर्शनार्थं, तथाहि-

कथं प्रवृत्तश्रद्धः ?, उच्यते, यत उत्पन्नश्रद्धः, इति हतुत्वदर्शनं चोपपन्नं, तस्य काव्यालङ्कारत्वात् यथा 'प्रवृत्तदीपामप्रवृत्तभास्करां, प्रकाशचन्द्रां बुबुधे विभावरी'मियत्र, अत्र हि यद्यपि प्रवृत्तिदीपादित्वादेवाप्रवृत्त भास्करत्वमुपगतं तथाप्यप्रवृत्तभास्करत्वं प्रवृत्तदीपत्वादेर्हेतुत-योपन्यस्तमिति सम्यक्, 'उप्पन्नसड्ढे उप्पन्नसंसये' इति प्राग्वत्, तथा 'संजायसड्ढे इत्यादि पदषटकं प्राग्वत्, नवरमिह संशब्दः प्रकर्षादिवचनो वेदितव्यः, 'उट्ठाए उट्ठेइ'त्ति उत्थानमुत्था-ऊर्द्धवर्त्तनं तया उत्तिष्ठति, इह 'उट्ठेइ' इत्युक्ते क्रियारम्भमात्रमपि प्रतीयेत यथा वक्तुमुत्तिष्ठते ततस्तद्व्यव-च्छेदार्थमुत्थायेत्युक्तं उत्थया उत्थाय 'जेणेवे'त्यादि यस्मिन् दिग्भागे श्रमणो भगवान् महावीरो वर्त्तते 'तेणेवे'ति तस्मिन्नेव दिग्भागे उपागच्छति, उप.गत्य च श्रमणं त्रिकृत्वः-त्रिवारान् आदक्षिण-प्रदक्षिणीकरोति, आदक्षिणप्रदक्षिणीक्तय च वन्दते नमस्यति वन्दित्वा नमंस्सित्वा एवमवादीत्।

'सूरियाभस्स णं भंते!' इत्यादि, 'कहिंगए' इति क गतः ?, तत्र गमनमन्तरप्रवेशाभावेऽपि दृष्टं यथा भित्तौ गतो धूलिरिति, एषोऽपि दिवयानुभावो यद्येवं कचित्प्रत्यासन्ने प्रदेशे गतः स्यात्ततो दृश्येत न चासौ दृश्यते, ततो भूयः पृच्छति-'कहं अणुपविट्ठे' इति कानुप्रविष्टः ? क्वान्तर्लीन इति भावः।

भगवानाह-गौतमः शरीरं गतः शरीरमनुप्रविष्टः पुनः पृच्छति-'से केणट्ठेण'मित्यादि, अथ केनार्थेन केन हेतुना भदन्त! एवमुच्यते-शरीरं गतः शरीरमनुप्रविष्ट ?, भगवानाह-गौतम 'से जहानामए' इत्यादि, कूटस्येव-पर्वतशिखरस्येवाकारो यस्याः सा कूटाकारा, यस्या उपरि आच्छादनं शिखराकारं सा कूटाकारेति भावः, कूटाकारा चासौ शाला च कूटाकारशाला, यदिवा कूटाकारेण शिखराकृत्योपलक्षिता शाला कूटाकारशाला स्यात्, 'दुहतो लित्ता' इति बहिरन्तश्च गोमयादिना लिप्ता गुत्ता-बहिप्रकारावृता गुप्तद्वारा द्वारस्थगनात् यदिवा गुप्ता गुप्तद्वारा-केषाञ्चित् द्वाराणां स्थगितत्वात् केषाञ्चिदस्थगितत्वादिति निवाता-वायोरप्रवेशात् किल महद् गृहं निवातं प्रायो न भवति तत आह-निवातगम्भीरा-निवाता सती गम्भीरा निवातगम्भीरा, निवाता सती विशाला इत्यर्थः, ततस्तस्याः कूटाकारशालाया अदूरसामन्ते-नातिदूरे निकटे वा प्रदेशे महान् एकोऽन्यतरो जनसमूहस्तिष्ठति।

स च एकं महत् अभ्ररूपं वार्दलं अभ्रवार्दलं, दाराभिपातरहितं सम्भाव्यवर्षं वार्दलमित्यर्थः, वर्षप्रधानं वार्दलकं वर्षवार्दलकं वर्षं कुर्वन्तं वादलकं महावातं वा 'एज्जमाण' मिति आयान्तं-आगच्छन्तं पश्यति, दृष्ट्वा च तं 'कूडागारसालं' द्वितीया षष्ठयर्थे तस्याः कूटाकारशालाया अनन्तरं ततोऽनुप्रविश्य तिष्ठति, एवं सूर्याभस्यापि देवस्य सा तता विशाला दिव्या देवर्धिर्दिव्या देवद्युतिर्दिव्यो देवानुभावः शरीरमनुप्रविष्टः 'से केणट्ठेणं' मित्यादि, अनेन प्रकारेण गौतम ! एवमुच्यते-'सूरियाभस्से' त्यादि, भूयो गौतमः पृच्छति-

*मू. (२७) कहि ण भंते! सूरियाभस्स देवस्स सूरिया नामं विमाने पन्नते ?, गोयमा!*

जंबूद्दीवे दीवे मंदरस्स पव्वयस्स दाहिणेण इमीसे रयणप्पभाए पुढवीए बहुसमरमणिज्जातो भूमिभागातो उड्ढं चंदिमसूरियगहगणनक्खत्ततारूवाणं बहूइं जोयणाइं बहूइं जोयणसयाइं बहूइं जोयणसहस्साइं बहूइं जोयणसयसहस्साइं बहुईओ जोयणकोडीओ बहुईओ जोयणसयसहस्सकोडीओ उड्ढं दूरं वीतीवइत्ता एत्थ णं।

सोहम्मे कप्पे नामं कप्पे पन्नते पाईणपडीणआयते उदीणदाहिणविच्छिण्णे अद्धचंदसंठाणसंठिते अच्चिमालिभासरासिवण्णाभे असंखेज्जाओ जोयणकोडाकोडीओ आयामविक्खंभेणं असंखेज्ञाओ जोयणकोडाकोडीओ परिक्खेवेणं इत्थ णं सोहम्माणं देवाणं बत्तीसं विमाणावाससयसहस्साइं भवतंतीति मक्खायं, ते णं विमाणं सव्वरयणामया अच्छा जाव पडिरूवा।

तेसिणं विमाणाणं बहुमज्झदेसभाए पंच वडिंसया पं० तंजहा १ असोगवडिंसते २ सत्तवन्नवडिंसते ३ चंपकवडिंसते ४ चूयवडिंसते ५ मज्झे सोहम्मवडिंसए, ते णं वडिंसगा सव्वरयणामया अच्छा जाव पडिरूवा, तस्स णं सोहम्मवडिंसगस्स महाविमानस्स पुरच्छिमेणं तिरियमसंखेज्ञाइं जोयणसयसहस्साइं वीईवइत्ता एत्थ णं सूरियाभस्स देवस्स सूरियाभे नामं विमाणे पन्नत्ते, अद्धतेरस जोयणसयसहस्साइं आयामविक्खंभेणं गुणयालीसं च सयसहस्साइं बावन्नं च सहस्साइं अद्ध य अडयाले जोयणसते परिक्खेवेणं, से णं एगेणं पागारेणं सव्वओ समंता संपरिखित्ते,

से णं पागारे तिन्नि जोयणसयाइं उड्ढं उच्चत्तेणं मूले एगं जोयणसयं विक्खंभेणं मज्झे पन्नासं जोयणाइं विक्खंभेणं उप्पिं पणवीसं जोयणाइं विक्खंभेणं मूले विच्छिन्ने मज्झे संखित्ते उप्पिं तनुए गोपुच्छसंठाणसंठिए सव्वकणगामए अच्छे जाव पडिरूवे, से णं पागारे नाना(मणि)विहपंचवन्नेहिं कविसीसएहिं उवसोभिते, तंजहा—किण्हेहिं नीलेहिं लोहितेहिं हालिद्देहिं सुक्किल्लेहिं कविसीसएहिं, ते णं कविसीसगा एगं जोयणं आयामेणं अद्धजोयणं विक्खंभेणं देसूणं जोयणं उड्ढं उच्चत्तेणं सव्वमणि(रयणा) मया अच्छा जाव पडिरूवा।

सूरियाभस्स णं विमाणस्स एगमेगाए बाहाए दारसहस्सं २ भवतीति मक्खायं, ते णं दारा पंचजोयणसयाइं उड्ढं उच्चत्तेणं अड्ढाइज्जाइं जोयणसयाइं विक्खंभेणं तावइयं चेव पवेसेणं सेया वरकणगथूभियागा ईहामियउसभतुरगणरमगरविहगवालगकिन्नररुरुसरभचमर-कुंजरवणलय-पउमलयभत्तिचित्ता खंभुग्गयवरवयरवेइया परिगयाभिरामा विज्ञाहरजमलजुयल-जंतजुत्तंपिव अच्चीसहस्समालिणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोयण-लेसा सुहफासा सस्सिरीयरूवा वन्नो दाराणं तेसिं होइ, तंजहा—

वइरामया निम्मा रिट्ठामया पइट्ठाणा वेरुलियमया सूइखंभा जायरुवोवचियपवर-पंचवन्नमणिरयणकोट्टिमतला हंसगब्भमया एलुया गोमेज्ञमया इंदकीला लोहियक्खमतीतो दारचेडीओ जोईरसमया उत्तरंगा लोहियक्खमईओ सूईओ वयरामया संधी नानामणिमया समुग्गया वयरामया अग्गला अग्गलपासाया रययामयाओ आवत्तणपेढीयाओ अंकुत्तरपासगा निरंतरियघण-कवाडा भित्तीसु चेव भित्तिगुलिता छप्पन्ना तिन्नि होंति गोमाणसिया तइया नानामणिरयण-वालरूयगलीलट्ठिअसालभंजियागा वयरामया कूडा रययामया उस्सेहा।

*सव्वतवणिज्जमया उल्लोया नानामणिरयणजालपंजरमणिवंसगलोहियक्खपडिवंसगरययभोमा अंकामया पक्खा पक्खवाहाओ जोइरसामया वंसा वंसकवेल्लुयाओ रययामयाओ पट्टियाओ जायरूवमईओ ओहाडणीओ वइरामईओ उवरिपुच्छणाओ सव्वसेयरययामयाच्छायणे अंकामया कणगकूडतवणिज्जथूभियागा सेया संखतलविमलनिम्मलदधिघणगोखीरफेणरययणिगरप्पगासा तिलगरयणद्धचंदचित्ता नानामणिदामालंकिया अंतो बहिं च सण्हा तवणिज्जवालुयापत्थडा सुहफासा सस्सिरीयरूवा पासाईया दरिसणिज्जा अभिरूवा पडिरूवा।*

**वृ.** क्वसूर्याभस्य देवस्य सूर्याभं विमानं प्रज्ञप्तं ?, भगवानाह—गौतमः अस्मिन् जम्बूद्वीपे यो मन्दरः पर्वतस्तस्य दक्षिणतोऽस्या रत्नप्रभायाः पृथिव्या बहुसमरमणीयात् भूमिभागादूर्ध्वं चन्द्रसूर्यग्रहणगनक्षत्रतारारूपाणामपि पुरतो बहूनि योजनानि बहूनि योजनशतानि ततो बुद्धया बहुबहुतरोत्पवनेन बहूनि योजनसह साप्येवमेव बहूनि योजनशतसहस्राणि एवामेव च बहीर्योजनकोटीरमेव च बहीर्योजनकोटीकोटीरूर्द्ध दूरमुत्पलुत्य अत्र—सार्द्धरज्जुप्रमाणे प्रदेशे सौधर्म्मो नाम कल्पः प्रज्ञप्तः, स च प्राचीनापाचीनायतः पूर्वापरायतः इत्यर्थः, उदग्दक्षिणविस्तीर्ण, अर्द्धचन्द्रसंस्थानसंस्थितो, द्वौ हि सौधर्म्मेशानदेवलोकौ समुदितौ परिपूर्णचन्द्रमण्डलसंस्थानसंस्थितौ, तयोश्च मेरोर्दक्षिणवर्तीसौधर्म्मकल्प उत्तरवर्त्ती ईशानकल्पः ततो भवति सौधर्म्मकल्पः चन्द्रसंस्थानसंस्थितः, 'अर्च्चिमाली' इति अर्चीषि—किरणानि तेषां माला अर्च्चिर्माला सा अस्यास्तीति अर्च्चिर्माली किरणमालासङ्कुल इत्यर्थः ।

असङ्ख्येययोजनकोटीकोटीः 'आयामविक्खंभेणं'ति आयामश्च विष्कम्भश्चायामविष्कम्भं समाहारो द्वन्द्वस्तेन, आयामेन च विष्कम्भेन चेत्यर्थः, असङ्ख्येया योजनकोटीकोट्यः 'परिआयामश्च विष्कम्भश्चायामविष्कम्भं समाहारो द्वन्द्वस्तेन, आयामेन च विष्कम्भेन चेत्यर्थः, असङ्ख्येया योजन- कोटीकोट्यः 'परिक्खेवेणं'' परिधिना 'सव्वरयणामए' इति सर्वात्मना रत्नमयः 'जाव पडिरूवे' इति यावत्करणात् 'अच्छे सण्हे घट्ठे मट्ठे' इत्यादिविशेषणकदम्बकपरिग्रहः, 'तत्थ ण' मित्यादि, तत्र सौधर्म्मे कल्पे द्वात्रिंशत् विमानशतसहस्राणि भवन्ति त्याख्यातं मया शेषैश्च तीर्थकृ—द्भिः ।

'ते णं विमाणे' त्यादि, तानि विमानानि सूत्रे पुस्त्वं प्राकृतत्वात् सर्वरत्नमयानि—सामस्त्येन रत्नमयानि 'अच्छानि' आकाशस्फटिकवदतिनिर्म्मलानि अत्रापि यावत्करणात् 'सण्हा लण्हा घट्ठा मट्ठा नीरया' इत्यादि विशेषणजातं द्रष्टव्यं, तच्च प्रागेवानेकशो व्याख्यातं 'तेसिणं' मित्यादि, तेषां विमानानां बहुमध्यदेशभागे त्रयोदशप्रस्तटे सर्वत्रापि विमानवतं सकानां स्वस्वकल्पचरमप्रस्तटवर्त्तित्वात् पञ्चावंतसकाः—पञ्च विमानावतंसकाः प्रज्ञप्ताः, तद्यथा—अशोकावतंसकः—अशोकावतंसकनामा, स च पूर्वस्यां दिशि, ततो दक्षिणस्यां सप्तपर्णावतंसकः पश्चिमायां चम्पकावतंसकः उत्तरस्यां चूतावतंसकः मध्ये सौधर्मावतंसकः, ते च पञ्चापि विमानावतंसकाः सर्वरत्नमया 'अच्छा जाव पडिरूवा' इति यावत्करणादत्रापि सण्हा लण्हा घट्ठा मट्ठा' इत्यादि विशेषणजातमव-गन्तव्यम्

अस्य च सौधर्मावतंसकस्य पूर्वस्यां दिशि तिर्यक् असङ्ख्येयानियोजनशतसहस्राणि व्यतिव्रज्य—अतिक्रम्यात्र सूर्याभस्य देवस्य सूर्याभं नाम विमानं प्रज्ञप्तं, अर्द्ध त्रयोदशं येषां तानि अर्द्धत्रयोदशानि, सार्द्धानि द्वादशेत्यर्थः, योजनशतसहस्राण्यायामविष्कम्भेन, एकोनचत्वारिंशत्

योजनशतसहस्राणि द्विपञ्चाशत्सहस्राणि अष्टौ च योजनशतानि अष्टचत्वारिंशदधिकानि ३९५२८४८ किञ्चिद्विशेषाधिकानि 'परिक्षेपेण' परिधिना, इदं च परक्षेपपरिमाण 'विक्खंभवग्गदहगुणकरणी वट्टस्स परिरओ होइ' इति करणवशात् स्वयमानेतव्, सुगमत्वात्। 'से णं एगेण' मित्यादि, तद्विमानकमेकेन प्राकारेण सर्वतः–सर्वासु दिक्षु समहोइ' इति करणवशात् स्वयमानेतव्, सुगम- त्वात्। 'से णं एगेण' मित्यादि, तद्विमानमेकेन प्रकाराण सर्वतः–सर्वासु दिक्षु समनन्ततः–सामस्त्येन परिक्षिप्तं।

'से णं पागारे' इत्यादि, स प्राकारः त्रीणि योजनशतानि ऊर्ध्वमुच्चैस्त्वेन मूले एवं योजनशतं विष्कम्भेण मध्यभागे पञ्चाशत्, मूलादारभ्य मध्यभागं यावत् योजने योजने योजनत्रिभागस्य विष्कम्भतस्त्रुटितत्वात्, उपरि–मस्तके पञ्चविंशतिर्योजनानि विष्कम्भेण, मध्यभागादारभ्योपरितनमस्तकं यावत् योजने योजने योजनषड्भागस्य विष्कम्भतो हीयमानतया लभ्यमानत्वात्, अत एव मूले विस्तीर्णो मध्ये संक्षिप्तः, पञ्चाशतो योजनानां त्रुटितत्वात्, उपरि तनुकः पञ्चविंशतियोजन- मात्रविस्तारात्मकत्वात्, अत एव गोपुच्छसंस्थानसंस्थितः, 'सव्वरयणामए अच्छे' इत्यादि विशेषणजातं प्राग्वत्।

'से ण पागारे' इत्यादि, स प्राकारो 'नानाविहपंचवन्नेहिं' इति नानाविधानि च तानि पञ्चवर्णानि च नानाविधपञ्चवर्णानि तैः, नानाविधत्वं च पञ्चवर्णापेक्षया द्रष्टव्यं कृष्णादिवर्णतारतम्यापेक्षया वा,पञ्चवर्णत्वमेव प्रकटयति– 'कण्हेहिं' इत्यादि, 'ते णं कविसीसगा' इत्यादि, तानि कपिशीर्षकाणि प्रत्येकं योजनमेकमायामतो–दैर्ध्येणार्द्ध योजनं विष्कम्भेण देशोनयोजनमुच्चैस्त्वेन 'सव्वरयणामया' इत्यादि विशेषणजातं प्राग्वत्।

'सूरियाभस्स ण'मित्यादि, एकैकस्यां बाहायां द्वारसहस्रमिति सर्वसङ्ख्यया चत्वारि द्वारसहस्राणि, तानि च द्वाराणि प्रत्येकं पञ्चयोजनशतान्यूर्ध्वं उच्चैस्त्वेन अर्द्धतृतीयानि योजनशतानि विष्कम्भतः 'तावइयं चेवे' ति अर्द्धतृतीयान्येव योजनशतानि प्रवेशतः 'सेया' इत्यादि, तानि च द्वाराणि सर्वाण्युपरि श्वेतानि–श्वेतवर्णोपेतानि बाहुल्येनाङ्करत्नमयत्वात् 'वरकणगथूभियागा' इति वरकनका–वरकनकमयी स्तूपिका–शिखरं येषां तानि तथा, 'ईहामिगउसभतुरगनरमगरविहगवालगकिन्नररुरुसरभचमरकुंजरवणलयपउमलयभत्तचित्ता खंभुग्गयवरवयवेइयापरिगयाभिरामा विज्जाहरजमलजुयलजंतजुत्ताविव अच्चीसहस्समालिणीया रूवगसहस्सकलिया भिसमाणा भिब्भिसमाणा चक्खुल्लोयणलेसा सुहफासा सस्सिरीयरूवा' इति विशेषणजातं यानविमानवद्भावनीयं, 'वन्नो दाराणं तेसिं होइ' इति तेषां द्वाराणां वर्ण–स्वरूपं व्यावर्णनमयं भवति, तमेव कथयति–

'तंजहे त्यादि, तद्यथा–'वइरामया निम्मा' इति नेमा नाम द्वाराणां भूमिभागादूर्द्ध निष्क्रमन्तः प्रदेशास्ते सर्वे वज्रमया–वज्ररत्नमयाः, वज्रशब्दस्य दीर्घत्वं प्राकृतत्वात्, एवमन्यमात्रापि द्रष्टव्यं, 'रिट्ठामया पइट्ठाणा' रिष्ठमया–रिष्ठरत्नमयानि प्रतिष्ठानानि मूलपादाः 'वेरुलियमया खंभा' इति वैडूर्यरत्नमयाः स्तम्भाः जायरूवोवचियपवरपंचवन्न(वर)मणिरयणकुट्टिमतला' जातरूपेणसुवर्णेन उपचितैः–युक्तैः प्रवरैः–प्रधानैः पञ्चवर्णैर्मणिभि–चन्द्रकान्तादिभि रत्नैः–कर्केतनादिभि कुट्टिमतलं– बद्धभूमितलं येषां ते तथा 'हंसगब्भमया एलुया' हंसगर्भमया–हंसगर्भाख्यरत्नमया

एलुका-देहल्यः 'गोमेज्जमया इंदकीला' इति गोमेज्जकरत्नमया इन्द्रकीलाः, 'लोहियक्खमईओ' लोहिताक्षरत्नमय्यः चेडाओ' इति द्वारशाखा 'जोइरसमया उत्तरंगा' इति द्वारस्योपरि तिर्यगवस्थित-मुत्तरङ्गं तानि ज्योतीरसमयानि-ज्योतीरसाख्यरत्नात्मकानि 'लोहियकखमईओ' लोहिताक्षमय्यो लोहिताक्षरत्नाधिकाः सूचयः फलकद्वयसम्बन्धविघटनाभावहेतुः पादुकास्थानीयाः 'वइरामया संधी' वज्रमयाः सन्धयः सन्धिमेलाः फलकानां, किमुक्तं भवति।

वज्ररत्नपूरिताः फलकानां सन्धयः, 'नानामणिमया समुग्गया' इति समुद्गका इव समुद्गकाः- शूचिकागृहाणि तानि नानामणिमयानि 'वयरामया अग्गला अग्गलपासाया' अर्गलाः-प्रतीताः अर्गलाप्रासादा यत्रार्गला नियम्यन्ते, आह च जीवाभिगममूलटीकाकारः-- "अर्गलाप्रासादो यत्रार्गला नियम्यन्ते इति" एते द्वये अपि वज्ररत्नमय्यौ 'रययामयाओ आवत्तणपेढियाओ' इति आवर्त्तनपीठिका नाम यत्रेन्द्रकीलको भवति, उक्तञ्च विजयद्वारचिन्तायां जीवाभिगमसूलटीकाकारेण- "आवर्त्तनपीठिका यत्रेन्द्रकीलको भवतीति 'अंकुत्तरपासगा' इति अङ्का-अङ्करत्नमया उत्तरपाश्र्वा येषां द्वारामां तानि अङ्कोत्तरपाश्र्वकाणि 'निरंतरियघणकवाडा' इति निर्गता अन्तरिका-लघ्वन्तररूपा येषां ते निरन्तरिका अत एव घना निरन्तरिका घनाः कपाटा येषां द्वाराणां तानि निरन्तरिकघनकपाटानि 'भित्तिसु चेव भित्तिगुलिया छप्पन्ना तिन्नि होंति' इति तेषां द्वाराणां प्रत्येकमुभयोः पाश्र्वयोः भित्तिषुभित्तिगताः भित्तिगुलिका-पीठकस्थानीयाः तिस्रः षट्पञ्चाशत्प्रमाणा भवन्ति 'गोमाणसिया (सज्जा) तइया' इति गोमनस्यः शय्या 'तइया' इति तावन्मात्राः षट्पञ्चाशत्रिकसङ्ख्याका इत्यर्थः।

'नानामणिरयणवालरूवगलीलट्ठियसालभंजियागा' इति इदं द्वारविशेषणमवे, नानामणिरत्नानि-नानामणिरत्नमयानि व्यालरूपकाणि लीलास्थितशालमञ्जिकाश्च-लीलास्थितपुत्तलिका येषु तानि तथा 'वयरामया कूडा रययामया उस्सेहा' इति कूडो-माडभाग उच्छ्रयः-शिखरं, आह च जीवाभिगममूलटीकाकृत्-'कूडो माडभाग उच्छ्रयः शिखर' मिति, नवरमत्र शिखराणि तेषामेव माडभागानां सम्बन्धीनि वेदितव्यानि, द्वारशिखराणामुक्तत्वात् वक्ष्यमाणत्वाच्च, 'सव्वतवणिज्जमया उल्लोया' उल्लोका-उपरिभागाः सर्वतपनीयमयाः-सर्वात्मना तपनीयरूपसुवर्णविशेषमयाः 'नानामणिरयणजालपंजरमणिवंसगलोहियक्खपडिवंसगर-ययभोमा' इति मणयो-मणिमया वंशा येषु तानि मणिमयवंशकानि लोहिताख्यानि-लोहिताख्यमयाः प्रतिवंशा येषु तानि लोहिताख्यप्रतिवंशकानि रजता-रजतमयी भूमिर्येषां तानि रजतभूमानि प्राकृतत्वात्समासान्तः मणिवंशकानि लोहिताख्यप्रतिवंशकानि रजता-रजतमयी भूमिर्येषां तानि रजतभूमानि प्राकृतत्वात्समासान्तः मणिवंशकानि लोहिताख्यप्रतिवंशकानि रजतभूमानि नानामणिरत्नानि-नानामणिरत्नमयानि जालपञ्जराणिगवाक्षापरपर्यायाणि येषु तानि तथा, पदानामनन्वयोषनिपातः प्राकृतत्वात्।

'अंकामया पक्खा पक्खवाहाओ' इति अङ्को-रत्नविशेषस्तन्मयाः पक्षास्तदेकदेशभूताः पक्षवाहवोऽपि तदेकदेशभूता एवाङ्कमय्यः, आह च जीवाभिगममूलटीकाकृत-"अङ्कमयाः-पक्षास्तदेकदेशभूता एवं पक्षवाहवोऽपि द्रष्टव्या" इति, 'जोईरसामया वंसा वंसकवेल्लुका य' इति ज्योतीरसं नाम रत्नं तन्मया वंशाः-महान्तः पृष्ठवंशा 'वंसकवेलुया य' इति महतां पृष्ठवंशाना-

मुभयतस्तिर्यक् स्थाप्यमाना वंशाः कवेल्लुकानि प्रतीतानि 'रययामईओ पट्टिआओ' इति रजतमय्यः पट्टिका—वंशानामुपरि कम्बास्थानीयाः 'जायरूवमईओ ओहाडणीयो' जातरूपं—सुवर्णविशेष- स्तन्मय्यः 'ओहाडणीओ' अवघाटिन्यः आच्छादनहेतुकम्बोपरिस्थ्याप्यमान महाप्रमाणाः- कवेलुस्थानीयाः 'वइरामईओ उवरिं पुञ्छणीओ' इति वज्रमय्यो—वज्ररत्नात्मिका अवघाटनी- नामुपरि पुञ्छन्यो—निविडतराच्छादनहेतुश्लक्ष्णतरतृणविशेषस्थानीयाः उक्तं च जीवाभिगम- मूलटीकाकारेण ।

"ओहाडणाग्रहणं महत् क्षुल्लकं च पुञ्छना इति" 'सव्वसेयरययामयाच्छायणे' इति सर्वश्वेतं रजतमयं पुञ्छनीनामुपरि कवेल्लकानामध आच्छादनं 'अङ्कमयकणगकूडतवणिज्जथूभियागा' अङ्कमयानि बाहुल्येनाङ्करत्नमयानि पक्ष २ बाह्यादीनामङ्करत्नात्मकत्वात् कनकानि—कनकमयानि कूटानि--महान्ति शिखराणि येषां तानी कनककूटानि तप नीयानि—तपनीयस्तूपिकानि, ततः पदत्रयस्यापि कर्म्मधारयः, एतेन यत् प्राक् सामान्येन उक्षिप्तं 'सेयावरकमगथूभियागा' इति तदेव प्रपञ्चतो भावितमिति, सम्प्रति तदेव श्वेतत्वमुपसंहारव्याजेन भूय उपदर्शयति—सेया— श्वेतानि, श्वेतत्वमेवोपमया द्रढयति ।

'संखतलविमलनिम्मलदधिघणगोखीरफेणरययनिगरप्पगासा' इति विगतं मलं विमलं यत् शङ्खतलं—शङ्खस्योपरितनो भागो यश्च निर्मलो दधिघनः—घनीभूतं दधि गोक्षीरफेनो रजतनिकरश्च तद्वत् प्रकाशः--प्रतिभासो येषां तानि तथा 'तिलगरयणद्धचंदचित्ता' इति तिलकरत्नानि— पुण्डविशे,स्तैरर्द्धचन्द्रैश्च चित्राणि—नानारूपाणि तिलकरत्नार्द्धचन्द्रचित्राण, क्वचित् 'सङ्खतल- विमलनिम्मलदहिघणगोखीरफेणरययनियरप्पगासद्धचंदचित्ताइं' इति पाठः, तत्र पूर्ववत् पृथक् पृथक् व्युत्पत्तिं कृत्वा पश्चात् पदद्वयस्य २ कर्मधारयः ।

'नानामणिदामालंकिया' इति नानामणयो—नानामणिमयानि दामानि—मालास्तैरल- ङ्कृतानि नानामणिदामालङ्कृतानि अन्तर्बहिश्च श्लक्ष्णानि--श्लक्ष्णपुद्गलस्कन्धनिर्मापितानि 'तवणिज्ञावालुयपत्थडा' इति तपनीयाः—तपनीयमय्यो या वालुकाः—सिकतास्तासां प्रस्तटः— प्रस्तरो येषु तानि तथा 'सुहफासा' इति सुखः—सुखहेतुः स्पर्शो येषु तानि सुखस्पर्शानि सश्रीकरूपाणि प्रासादीयानीत्यादि प्राग्वत् ।

**मू. (२८)** *तेसि णं दाराणं उभओ पासे दुहओ निसीहियाए सोलस २ चंदनकलसपरिवा- डीओ पन्नत्ताओ, ते णं चंदनकलसा वरकमलपइट्ठाणा सुरभिवरवारिपडिपुन्ना चंदेनकयचच्चागा आविद्धकंठेगुणा पउमुप्पलपिहाणा सव्वरयणामया अच्छा जाव पडिरूवा महया २ इंदकुंभसमाणा पन्नत्ता समणाउसो !, तेसि णं दाराणं उभओ पासे दुहओ णसीहियाए सोलस २ नागदंतपरिवाडीओ पन्नत्ताओ ।*

*ते णं नागदंता मुत्ताजालंतरुसियहेमजालगवक्खजालखिंखिणी (घंटा) जालपरिखित्ता अब्भुग्गया अभिनिसिट्ठा तिरियसुसंपग्गहिया अहेपन्नगद्धरूव पन्नगद्धसंठाणसंठिया सव्ववयरामया अच्छा जाव पडिरूवा महया महया गयदंतसमाणा पन्नता समणाउसो ! ।*

*तेसु णं नागदंतएसु बहवे किण्हसुत्तबद्धवट्टवग्घारितमल्लदामकलावा नील० लोहित० हालिद्द० सुक्किलसुत्तवट्टवग्घारितमल्लदामकलावा, ते णं दामा तवणिज्जलंबूसगा सुवण्णपयरमंडियगा*

*जाव कन्नमणनिव्वुनिकरेणं सद्देणं ते पदेसे सव्वओ समंता आपूरेमाणा २ सिरीए अईव २ उवसोभेमाणा चिट्ठंति ।*

*तेसिणं नागदंताणं उवरिं अन्नाओ सोलस सोलस नागदंतपरिवाडीओ पं०, ते णं नागदंता तं चेव जाव महता २ गयदंतसमाणा पन्नत्ता समणाउसो ! तेसु णं नागदंतएसु बहवे रययामया सिक्कगा पन्नत्ता, तेसु णं रययामएसु सिक्कएसु बहवे वेरुलियामईओ धूवघडीओ पं०, ताओ णं धूवघडीओ कालगुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुयाभिरामाओ सुगंधवरगंधियातो गंधवट्टिभूयाओ ओरालेणं मणुन्नेणं मनहरेणं घाणमणनिव्वुइकरेणं गंधेणं ते पदेसे सव्वओ समंता जाव चिट्ठंति ।*

*तेसि णं दाराणं उभओ पासे दुहओ निसीहियाए सोलस सोलस सालभंजियापरिवाडीओ पन्नत्ताओ, ताओ णं सालभंजियाओ लीलट्ठियाओ सुपइट्ठियाओ सुअलंकियाओ नानाविहराग-वसणाओ नानामल्लपिणद्धाओ मुट्ठिगिज्झसुमज्झाओ आमेलगजमलजुयलवट्टियअब्भुन्नय-पीणरइयसंठियपीवरपओहराओ रत्तावंगाओ असियकेसीओ मिउविसयपसत्थलक्खण-संवेल्लियग्गसिरयाओ ।*

*ईसिं असोगवरपायवसमुट्ठियाओ वामहत्थग्गहियग्गसालाओ ईसिं अद्धच्छिकड-क्खचिट्ठिएणं लूसमाणीओ विव चक्खुल्लोयणलेसेहिं अन्नमन्नं खेज्जमाणिओ (विव) पुढविपरिणामाओ सासयभावमुवगयाओ चन्दाननाओ चंदविलासिणीओ चंदद्धसमणिडालाओ चंदाहिय-सोमदंसणाओ उक्का (विव उज्जोवेमाणाओ) विज्जुघणमिरियसूरदिप्पंततेयअहिययरसन्निकासाओ सिंगारागारचारुवेसाओ पासा वेमाणाओ) विज्जुघणमिरियसूरदिप्पंततेयअहिययरसन्निकासाओ सिंगारागारचारुवेसाओ पासा० दरसि० (पडि० अभि०) चिट्ठंति ।*

**वृ.** तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकाभावेन 'दुहतो' इति द्विधातो द्विप्रकारायां नैषेधिक्यां, नैषेधिकीनिषीदनस्थानं, आह च जीवाभिगममूलटीकाकृत-''नैषेधिकी निषीदनस्थान''मिति, प्रत्येकं षोडश २ (कलश) परिपाटयः प्रज्ञप्ताः, ते च चन्दनकलशा 'वरकमल-पइट्ठाणा' इति वरं-प्रधानं यत्कमलं तत् प्रतिष्ठानम्-आधारो येषां ते वरकमलप्रतिष्ठानाः, तथा सुरभिवरवारिप्रतिपूर्णाश्चन्दनकृतचर्चाकाः-चन्दनकृतोपरागाः 'आविद्धकण्ठेगुणा' इति आविद्धः-आरोपितः कण्ठेगुणोःरक्तसूत्ररूपो येषां ते आविद्धकण्ठेगुणाः, कण्ठेकालवत् सप्तम्या अलुक्, 'पउमुप्पलपिहाणा' इति पद्ममुत्पलं च यथायोगं पिधानं येषां ते पद्मोत्पलपिधानाः 'सव्वरय-णामया अच्छा सण्हा लण्हा' इत्यादि यावत् ।

'पडिरूवगा' इति विशेषणकदम्बकं प्राग्वत् 'महया' इति अतिशयेन महान्तः कुम्भानामिन्द्र इन्द्रकुम्भो राजदन्तादिदर्शनादिन्द्रशब्दस्य पूर्वनिपातः महांश्चासौ इन्द्रकुम्भश्च तस्य समाना महेन्द्रकुम्भसमानाः-महाकलशप्रमाणाः प्रज्ञप्ता हे श्रमण ! हे आयुष्मन् । 'तेसिणं दाराण'मिति तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन या द्विधा नैषेधिकी तस्यां प्रत्येकं षोडश षोडश नागदन्तपरिपाटयः प्रज्ञप्ताः, नागदन्ता-अङ्कुटकाः, ते च नागदन्ता 'मुत्तजालंत-रुसियहेमजालगवक्खजालखिंखिणि(घंटा)जालपरिखित्ता' इति मुक्ताजालानामन्तरेषु यानि उत्सृतानि-लम्बमानानि हेमजालानि-सुवर्णमयदामसमूहा यानि च गवाक्षजालानिग-

वाक्षाकृतिरत्नविशेषमालासमूहा यानि च किङ्किणिघटाजालानि–क्षुद्रघण्टासमूहास्तैः परिक्षिप्ताः –सर्वतो व्याप्ताः 'अब्भुग्गया' इति अभिमुखमुद्गताः अग्रिमभागे मनाक् उन्नता इति भावः 'अभिनिसिट्ठा' इति अभिमुखं बहिर्भागाभिमुखं निसृष्टा निर्गता अभिनिसृष्टाः 'तिरिय-सुसंपरिग्गहिया' इति तिर्यक् भित्तिप्रदेशैः सुष्ठु–अतिशयेन सम्यक्–मनागप्यचलनेन परिगृहीताः सुसम्परिगृहीताः, 'अहेपन्नगद्धरूवा' इति अधः–एतदेव व्याचष्टे–'पन्नगार्द्धसंस्थान-संस्थिता' अधःपन्नगार्द्धसंस्थानाः 'सव्ववयरामया' सर्वात्मना वज्रमया 'अच्छा सण्हा' इत्यारभ्य 'जाव पडिरूवा' इति विशेषणजातं प्राग्वत्।

'महया' इति अतिशयेन महान्तो गजदन्तसमाना–गजदन्ताकाराः प्रज्ञप्ता हे श्रमण ! हे आयुष्मन् ! 'तेसु ण नागदंतएसु बहवे किण्हसुत्तबद्धा' तेषु नागदन्तेषु बहवः कृष्णसूत्रबद्धा 'वग्घारिय' इति अवलम्बिता माल्यदामकलापाः–पुष्पमालासमूहा बहवो नीलसूत्रावलम्बित-माल्यदामकापा एवं लोहितहारिद्रशुक्लसूत्रबद्धा अपि वाच्याः। 'ते णं दामा'इत्यादि, तानि दामानि 'तवणिज्जलंबूसगा' इति तपनीयः–तपनीयमयो लम्बूसगो–दाम्नामग्रिमभागे मण्डनविशेषो येषां तानि तथा, जाव लंबूसकानि, 'सुवन्नपयरगमंडिया' इति पार्श्वतः सामस्त्येन सुवर्णप्रतरेण–सुवर्णपत्रकेण्णमण्डितानि सुवर्णप्रतरमण्डितानि।

'नानाविहमणिरयणविविहहारउवसोहियसमुदया' इति नानारूपाणां मणीनां रत्नानां च विविधा–विचित्रवर्णा हारा–अष्टादशसरिका अर्द्धहारा–नवसरिकास्तैरुपशोभितः समुदायो येषां तानि तथा 'जाव सिरीए अईव २ उवसोभेमाणा चिट्ठंति' इति अत्र यावत्करणादेवं परिपूर्ण पाठो द्रष्टव्यः 'ईसिमण्णोण्णमसंपत्ता पुव्वावरदाहिणुत्तरागएहिं वाएहिं मंदायं मंदायं एइज्जमाणा पइज्जमाणा पलंबमाणा पझंझमाणा ओरालेण मणुण्णेणं मणहरेणं कण्णमणनिव्वुइकरेणं सद्देणं ते पएसे सव्वओ समंता आपूरेमाणा २ सिरीए अईव २ उवसोभेमाणा चिट्ठंति' एतच्च प्रागेव यानविमानवर्णने व्याख्यातमिति न भूयो व्याख्यायते।

'तेसि णं नागदंताणं'मित्यादि, तेषां नागदन्तानामुपरि प्रत्येकमन्याः षोडश षोडश नागदन्तपरिपाटयः प्रज्ञप्ताः ते च नागदन्ता यावत्करणात् 'मुत्तजालंतरुसियहेमजाल-गवक्खजालखिंखिणिघंटाजालपरिखित्ता' इत्यादि प्रागुक्तं सर्वं द्रष्टव्यं यावत् गजदन्तसमानाः प्रज्ञप्ता हे श्रमण ! हे आयुष्मन् ! 'तेसु णं नागदंतएसु' इत्यादि, तेषु नागदन्तकेषु बहूनि रजतमयानि सिक्ककानि प्रज्ञप्तानि, तेषु वररजतमयेषु सिक्ककेषु बहवो–बह्व्यो वैडूर्यमय्य–वैडूर्यरत्नात्मिका धूपघटिकाः 'कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंते'त्यादि प्रगावत् नवरं 'घाणमणनिव्वुइ-करेण'मिति घ्राणेन्द्रियमनोनिर्वृतिकरेण।

'तेसि ण'मित्यादि, तेषां द्वाराणां प्रत्येकमुभयोः पार्श्वयोरेकैकनैषेधिकीभावेन द्विधातो–द्विप्रकारायां नैषेधिक्यां षोडश षोडश शालभञ्जिकापरिपाटयः प्रज्ञप्ताः, ताश्च शालभञ्जिका लीलया–ललिताङ्गनिवेशरूपया स्थिता लीलास्थिताः, 'सुपइट्ठियाओ' इति सुमनोज्ञतया प्रतिष्ठिताः सुप्रतिष्ठिताः 'सुअलंकियाओ' सुष्ठु–अतिशयेन रमणीयतया अलङ्कृताः स्वलङ्कृताः 'नानाविहरागवसणाओ' इति नानाविधोनानाप्रकारो रागो येषां तानि नानविधरागाणि तानि वसनानि–वस्त्राणि यासां तास्तथा 'नानामल्लपिनद्धाओ' इति नानारूपाणि माल्यानि–पुष्पाणि

पिनद्धानि—आविद्धानि यासां ता नानामाल्यपिनद्धाः, क्तान्तस्य परनिपातः सुखादिदर्शनात्, 'मुट्ठिगेज्झसुमज्झाओ' इति मुष्टिग्राह्यं सुष्ठु—शोभनं मध्य—मध्यभागो यासां तास्तथा, 'आमेलग-जमलजुगलवट्टियअब्भुन्नयपीणरइयसंठियपीवरपओहराओ' पीनं—पीवरं रचितं संस्थितं—संस्थानं यकाभ्यां तौ पीनरचितसंस्थानौ आमेलकः—आपीडः शेखरक इत्यर्थः ।

तस्य यमलयुगलं—समश्रेणिकं यद्युगलं तद्वत् वर्त्तितौ—वद्धस्वभावावुपचितकठिनभावा-विति भावः अभ्युन्नतौ पीनरचितसंस्थानौ च पयोधरौ यासां तास्तथा, 'रत्तावंगाओ' इति रक्तोऽ-पाङ्गो—नयनोपान्तरूपो यासां तास्तथा, 'असियकेसिओ' इति असिताः—कृष्णाः केशा यासां ता असितकेश्यः, एतदेव सविशेषमाचष्टे—'मिउविसयपसत्थलक्खणसंवेल्लियग्गसरियाओ' मृदवः—कोमला विशदा—निर्मलाः प्रशस्तानि—शोभनानि अस्फुटिताग्रत्वप्रभृतीनि लक्षणानि येषां ते प्रशस्तलक्षणाः 'संवेल्लितं' संवृतमग्रं येषां ते संवेल्लिताग्राः शिरोजाः—केशा यासां ता मृदुविशद-प्रशस्तलक्षणसंवेल्लिताग्रशिरोजाः, 'ईसिं असोमवरपायवसमुट्ठियाओ' ईषत्—मनाक् अशोक-वरपादपे समुपस्थिताः—आश्रिता ईषदशोकवरपादपसमुपस्थितास्तथा 'वामहत्थग्गहियग्ग-सालाओ' वामहस्तेन गृहीतमग्रं शालकाः—शाखका अर्थादशोकपादपस्य यकाभिस्ता वामहस्तगृहीताग्रशालाः ।

'ईसिं अद्धच्छिकडक्खचिट्ठिएणं लूसमाणीओ विवे'ति ईषत्—मनाक् अर्द्धं- तिर्यक् वलितमक्षि येषु कटाक्षरूपेण चेष्टितेसु तैर्मुष्णन्त्य इव सुरजनाना मनांसि 'चक्खुल्लोयणलेसेहिं य अन्नमन्नं खिज्जमाणीओ विव' 'अन्योऽन्यं परस्परं चक्षुर्षालोकनेन—आलोकनेन ये लशाः—संश्लेषस्तैः खद्यमान इव, किमुक्तं भवति ?—एवंनामानस्ति(म)र्यग्वलिताक्षिकटाक्षैः परस्परमवलोकमाना अवतिष्ठन्ति यथा नूनं परस्परं सौभाग्यासहनतस्तिर्यग्वलिताक्षिकटाक्षैः परस्परं खिद्यन्ति इवेति, 'पुढविपरिणामाओ' इति पृथिवीपरिणामरूपाः शाश्वतभावमुपगता विमानवत् ।

'चंदाननाओ' इति चन्द्र इवाननं—मुखं यासां तास्तथा 'चंदविलासिणीओ' इति चन्द्रवत् मनोहरं विलसन्तीत्येवंशीलाश्चन्द्रविलासिन्यः 'चंदद्धसमनिडालाओ' इति चन्द्रार्द्धसमम्—अष्टमीचन्द्रसमानं ललाटं यासां तास्तथा 'चंदाहियसोमदंसणाओ' इति चन्द्रादपि अधिकं सोमं—सुभगकान्तिमत् दर्शनम्—आकारो यासां तास्तथा उल्का इव उद्योतमानाः 'विज्जुघणमरिचिसूरदिप्पं ततेयअहिययरसन्निकासातो' इति विद्युतो ये घना—बहलतरा मरीचयस्तेभ्यो यच्च सूर्यस्य दीप्यमानं दीप्तं—तेजस्तस्मादपि अधिकतरः सन्निकाशः—प्रकाशो यासां तास्तथा, 'सिंगारागारचारुवेसाओ पासाइयाओ दरिसणिज्जाओ पडिरूवाओ अभिरूवाओ चिट्ठंति' इति प्राग्वत् ॥

**मू. (२९)** *तेसि णं दाराणं उभओ पासे दुहओ निसीहियाए सोलस सोलस जालकडगपरिवाडीओ पन्नत्ता, ते णं जालकडगा सव्वरयणामया अच्छा जाव पडिरूवा । तेसि णं दाराणं उभओ पासे दुहओ निसीहियाए सोलस सोलस घंटापरिवाडीओ पन्नत्ता, तासि णं घंटाण इमेयारूवे वन्नावासे पन्नत्ते, तंजहा—*

*जंबूणयामईओ घंटाओ वयरामयाओ लालाओ नानामणिमया घंटापासा तवणिज्जाम-इयाओ संखलाओ रययामयाओ रज्जूतो, ताओ णं घंटाओ ओहस्सराओ मेहस्सराओ सीहस्सराओ दुंदुहिस्सराओ कुंचस्सराओ नंदिस्सराओ नंदिघोसाओ मंजुस्सराओ मंजुघोसाओ सुस्सराओ*

